REGISTERED No. M. 103.

Vol. XIII. No. 4.

# The Sanskrit Journal

— OR —

# ॥ सहृदया ॥




संपादकः
र. कृष्णमाचार्यः, एम्. ए.

सहकारिसंपादकः
रा. च. वि. कृष्णमाचार्यः.

सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥



विषयाः ।



PUBLISHED AT PUDUKOTTA.

SRI VANI VILAS PRESS.
—— SRIRANGAM ——
1908.

## सहृदया नियमाः ।

१. सहृदयाया द्वात्रिंशत्पृष्ठात्मिका एकैका संचिका प्रतिमासं प्रचार्येत । अस्यां च ललितपदघटिता अवश्यज्ञेयविषयभासुरा गद्यमयाः प्रबन्धा एव प्रायेण भवेयुः ।

२. उपन्यासलेखकैरपि महाशयैः सुस्पष्टमेकस्मिन्पत्रपृष्ठे मुद्रितग्रन्थरीत्या संधिविरामपुरःसरं विलिख्य प्रेषिता एव प्रबन्धाः सहृदयायामवकाशं लभेरन् ।

३. तत्तदुपन्यासप्रकाशनाप्रकाशनयोः, तत्र तत्र परिवर्तने वा पत्राधिपेच्छैव निष्पक्षपाता नियामिका ।

४. प्रेषिताः प्रबन्धा अप्रकाशिता दत्ते शुल्के परावर्त्येरन् । उत्तराकाङ्क्षिभिश्च शुल्कपत्रमवश्यं प्रेर्यम् ।

५. अधिकभागयोजनेऽपि वार्षिकं मूल्यं परं यथापुरं रूप्यत्रयमेव । प्रापणव्ययो न पृथक् । एकस्याः संचिकायास्तु आणकचतुष्टयं मूल्यम् । इङ्ग्लण्डादिषु तु अस्या मूल्यं नव षिल्लिङ्गाः ।

६. उपन्यासाः, पुस्तकानि च "सहकारिसंपादकः, सहृदया, कोत्तवाल्चावडि, तृच्चिनाप्पल्लि" इत्यत्र प्रेर्याणि । एतदन्यसमस्तकार्यार्थमपि लेखाः "मानेजर्. सहृदया आपीस्. पुदुक्कोट्टै" इत्यत्र प्रेषणीयाः ।

## विज्ञापनप्रकाशन नियमाः ।

१. संपूर्णस्य एकस्य पृष्ठस्य वार्षिकं प्रकटनमूल्यं चतुर्विंशती रूपिकाः । रू. २४.

२. प्रतिमासमेकस्याः पङ्क्तेः आणकद्वयम् । अणा. २.

३. चिरकालभाविनो विज्ञापनप्रकाशनस्य तु सौकर्यं क्रियेत । तत्र कार्यालयाद्विज्ञेयम् ।

॥ श्रीः ॥

# ॥ सहृदया ॥



कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि ॥

संपु. १.] कीलकवर्ष आषाढमासः । [संचि. ४.

## सुभाषितानि ।

सुदृशां श्रुतिपथसुभगंकरणगिरामतनुशास्त्रवश्यानाम् ।
पुरुषोत्तमरतिभाजां सदागतिष्वादरः कथं न स्यात् ॥

अल्पं मध्यममुच्चैराश्रयतामतनुकलहमुखराणाम् ।
बन्धं कुर्युः सुदृशो हन्त खलानां च मेखलानां च ॥

प्रसक्ते श्रीलेशे परिचितनृणामप्यगणनं
प्रयत्नैरस्तोकैरपि परफलाप्तेर्विघटनम् ।
वचश्च प्रत्यक्षे सति मधु परोक्षे खलु विषं
बुधौघैर्वैमुख्यं पुरुषमविनीतं कथयति ॥

श्री वेङ्कटाध्वरी ।

# भारतखङ्गाः ।

---

उदात्तविक्रम मदाढ्यरिपुबल भिदाविर्भवन्
तदा घटोत्कच उदारानमून् हृदा स्मृतो वः
पदान्तिके स्या मुदायुधः सन् मुदायमहमि-
त्युदाहरन्ना स्पदात्ततोऽगा त्तदाश्रमं सं-
मदातिशयसं पदाहानि कति चिदावसन्तोऽ-
पदानिनोऽथ स्वदाक्ष्यतोऽथै कदा विप्रधी-
प्रदाकृतिजुषो वदान्यैः क्रिया विदामादिमैः
सदान्वितं सुख निदानमुच्छ्रय वदाप्रुवन्नग-
रमेकचक्राख्यम् भैक्षभुजो यत्र तेऽगमन्सौख्यम् ॥२२॥

स्ववास्तुनि सुदु र्निवारशुग्वै भवायताश्रु-
प्रवाहिका द्विज सुवासिनी नि श्युवाच किमिति
त्त्रवाणां पृथां शवाशनोऽसुर सवाशगणला-
घवावहो रवि भवातटे यम इवास्ति बक इति
निवासिभिरिहा भिवाञ्छतेऽस्मै दिवाप्योऽन्वहं
नवान्ननरबलि रवाप्स्यति श्वः स वासरो मां
भवास्य बलिरि त्यवामगुणगौ रवाढ्यमेकं
गवा सुतमिमं जवादुदीर्य क्व वा गतिर्मे इ-
ति शोकसमवेतां सुतोऽत्र मेऽस्त्विति समाधितासौ ताम् ॥

मृषा न वकमा मिषाशमहमभि लषामि हन्तुं

तुषारमधिप स्त्विषामिवेत्यू चुषा प्रसूक्ता-
शिषा समग्रा युषाथ निर्ज ग्मुषा स्वगतिजित-
वृषादिना धृत रुषा हिडिम्ब द्विषामुनासौ
तृषा क्षुधापि च कषायितः पौ रुषाभिलापन-
मिषादुद्द्रुम न्विषाणि बलवि प्रुषा रणोद्यम-
पुषा महोच्छ्रय जुषाभ्यभूयत तुषादिकमिवा
र्चिषाग्निना ह्यनि मिषावलौ मिल दृषाववेक्ष्या-
भितः प्रशंसन्त्यां न्यवेदयदसा वशेषमपि कुन्त्याम् ॥

सुतास्वयंवर वितानसंभ्रम वता द्रुपदभू-
भृता समाम न्त्रिता नृपाः प्र स्थिता वलन्ते
सतामतोऽभ्युप यतामभीप्सित शतानि तत्रो-
च्छ्रितानुभावः स तादृशः कल यिता किलेत्यु-
त्थितानि विप्रो दितानि तैर्निश मितानि तत्पुर-
गतावुद्यमं बताधिकमत न्वताथ ते नि-
र्गता धर्ममा रुताहिहसुता युता यमाभ्यां
वृता निजपुरो हितादिभिरगुः पताकिनीं तां
पुरीं सुधीमुख्याः पथि संभृतचित्र सेनजयसख्याः ॥ २५ ॥

कुलालभवना त्किलास्थितात्तेऽ चलादुदयतः
कला इवेन्दोः सलालसाः शुभ फलाय चलिता
बलारिधर्मा निलाश्वितनया बलादियादव-
कुलाधिपैः सौ बलादिभिर्म ण्डलाधिपैर्नि-
र्मलाम्बरैः कु ण्डलादिभूषो ज्ज्वलात्माभिः पे

शलारावमे खलापदाङ्गद कलापकृष्णा-
विलासगतिकौ शलावलोका भिलाषनिभृता-
खिलाक्षैर्नभो वलाहकैरिव ललामवदगुः
स्वयंवरस्थानं वरवेध्यं लक्ष्म यत्र दुर्ज्ञानम् ॥ २६ ॥

ततोऽग्र्यलक्ष्य प्रतोदसमुदा प्रतो द्रुपदभू-
भृतो दुहित्रा वृतोऽहह शत क्रतोरात्मभू-
र्वतोपहूय न इतो दुर्धिया न्यतोऽर्पिता निज-
सुतोढधृतिना सतोषमिति सं भृतोरुकोपान्
शितोग्रविशिखै र्न्नतोऽरिनृपतीन् स तोलयन् कर-
धृतोच्चचापः स्तुतो द्विजगणैः प्रतोल्यामथा-
भितो जनैर्बहु मतो भृशं यो षितोपगतया-
न्वितो गृहेऽम्बां नतोऽत्र भिक्षा हृतोद्यतैषे-
त्युवाच तां सविधे पञ्चानां वोऽस्तु सेति साभिदधे ॥ २७ ॥

स राजवर्यः पराशरात्मज गिरा पञ्च ते
वराः स्वदुहितुः पुरारिरेवं पुरा वरमदा-
च्चिरायुषो नि र्जरांशा नरे श्वरा न तु मही-
सुरा इति विदन् स्थिरादरो म न्दिरान्तरन्ये-
द्युराहूय तान् पराध्यचामी करालंक्रिया-
धरामतिमनो हरामात्मजां विराविते सु-
स्वरातोद्यके सरागामदा त्तराममीभ्योऽ-
म्बराभरणस त्तराश्वरथकु ञ्जरादिकं यौ-
तकं च बहु मुदितः तेषां हृदि संमदश्च भृशमुदितः ॥ २८ ॥

# अशोकमहाराजः ॥

भारतवर्षे कलौ युगे महता साम्राज्येन भूयसा पौरुषेण समधिकेन औदार्येण गरीयसा महाशयत्वेन विशिष्टेन विज्ञानाभिनिवेशेन च परां ख्यातिमवाप्तेषु भूपालेषु प्रथमोऽयमशोकमहाराजः। अतिप्रशस्तैरनेकैर्गुणैरलंकृतमेनं नात्यशेत कश्चिदप्यनन्तरजातो भूपतिर्महिम्ना। अयं च मगधानामधिपतिः। एतज्जीवनकालात्पूर्वं संवत्सरशतद्वयीतः प्रागलंचकार भूतलं गौतमबुद्धः। जीवत्येव गौतमबुद्धे, बिम्बिसारोऽजातशत्रुश्च राजानौ यथाक्रमं मगधराज्यस्य प्राचीं प्रतीचीं च मर्यादामवर्धयताम्। अशोकस्य पिता बिन्दुसारः। माता च सुभद्राङ्गी नाम ब्राह्मणयोषिदित्युच्यते चरित्रवेदिभिः। पितामहस्तु सुप्रसिद्धश्चन्द्रगुप्तः। चन्द्रगुप्तश्च महति यवनराजे अलक्सान्दरे भारतात्स्वदेशं प्रतिनिवृत्ते स्वकीयं मगधराज्यं सुविशालमात्मना चकार। निखिलमप्युत्तरभारतं तदानीमभवदन्तर्गतं मगधमण्डलस्य। अशोकश्च बाल्य एव स्वपितुर्नियोगेन राजप्रतिनिधिः सन्नध्यवात्सीदुज्जयिनीम्। समरसमुत्सुकश्चायमशोकः कदाचित्तक्षशिलायामुत्पन्नमुपशमयितुं कलहमादिश्य प्रेषितः पित्रा, सपदि सर्वात्मना शमयांचकार सकलमप्यान्तरालिकं संक्षोभम्। स्वपितरि च बिन्दुसारे गते कीर्तिशेषतामखिलाभिनन्दितोऽयमारुरोह सिंहासनं एकचत्वारिंशदधिकशताष्टकोत्तरसहस्रद्वयपरिमिते २८४१ कलिसंवत्सरे।

अभिषेकादनन्तरं नवमे वर्षे स्वीचकार बुद्धमतमशोकः। अशोको हि महता समरेण कलिङ्गानायत्तीचकार। तस्मिंश्च संगरे

स्वपरसैन्ययोरनेकैः प्रकारैरतिजुगुप्सितं पश्यतां भीषणं च मरणमवलोक्य नितरां जातनिर्वेदः केवलमहिंसाप्रधानमङ्गीचकार बुद्धमतमिति वदन्ति । वत्सरद्वयानन्तरं च बुद्धमतं सर्वतः प्रचारयितुमयमारभत । तदनन्तरं च गतयोर्द्वयोः संवत्सरयोरयमात्मनः शासनानि परितः प्रसारयामास । सिंहासनमारोहतोऽशोकमहाराजस्य तदानीं सहोदराः सहोदर्यश्चासान्निति तेभ्यः शासनेभ्योऽवगम्यते । अशोको राज्यलाभेन स्वसहोदरान्निजघानेति दुष्प्रवादस्तु तस्य बुद्धमतप्रवेशमालोक्य जातासूयैः कुपितैश्च ब्राह्मणैरुत्पादितो निष्प्रमाणकश्चेत्यनेन शासनगणेन विश्वसनीयं भवति । बौद्धा अपि स्वमतोत्कर्षवर्णनाय आजानविमलमप्यशोकं बाल्ये बहुशः क्रूरकर्मकारिणमुदघुष्यन् । अस्य च राजधानी पाटलीपुत्रम् । उज्जयिनीतक्षशिलादयोऽपि प्रदेशा अस्मिन्नायतन्त । किं बहुना—उत्तरभारतं निखिलमप्यस्यैव वशे अवर्तत । उत्तरभारतावधेः परतोऽपि काम्भोजगान्धारप्रतिष्ठानान्ध्रपुलिन्दादयो बहवो देशा अस्याधिराज्ये अभूवन् । एतेन कृष्णानदीमारभ्य यावद्गान्धारमस्य साम्राज्यमिति निर्णीयते । चोलपाण्ड्यकेरलास्तु तदानीं न तदीयं शासनमनुप्रविष्टाः । शिलालेखेभ्यश्च अशोकस्य राज्यतन्त्रमधिकृत्य इमे विषया ज्ञायन्ते । यथा—अशोकेन बहुष्वधिकारेषु ते ते महाशया नियमिताः । राज्यतन्त्राधिकारिणः, वेदस्य सतो मार्गस्य चोपदेशकाः, चाराश्च, स्वस्वकर्मणि जागरूका आसन् । ज्ञानोपदेशार्थं चाशोकेन कश्चन बौद्धवैदिकसमाजः स्थापितः, यस्य च 'अनुसंयानम्' इति व्यपदेशः । स च संघस्त्रयाणां पञ्चानां वा संवत्सराणां सकृत्संमिलेत् । अशोकश्च सर्वतोऽपि बुद्धमतं प्रसारयितुकामस्तत्र तत्र वाग्मिनो बुद्ध-

मतानुयायिनः प्रसङ्गाय प्रेषयामास ।

बहवश्च शिलालेखा अशोकस्य संप्रति समुपलब्धाः । तत्र प्राथमिकेषु चतुर्दशसु शिलालेखेषु परिशील्यमानेषु क्रमेण ज्ञायमाना विषया इमे । यथा— १. प्राणिहिंसा विनिवारिता । २. मनुष्याणां तिरश्चां च चिकित्सार्थं बहवो व्यवस्था विरचिताः । ३. पञ्चवार्षिकं च धर्मोत्सवमाततान । ४. धर्म्यास्वखिलास्वपि क्रियासु आत्मन आनुकूल्यमाविश्चकार । ५. पुरोहिता मतप्रचारकाश्च तत्र तत्र स्थापिताः । ६. जनानां सामाजिकेषु गृह्येषु च कर्मसु परिदृश्यमानान्संप्रदायभेदान्सम्यग्विचारयितुं सन्मार्गोपदेशिनो बहून्महाशयान्न्ययुङ्क्त । ७. सर्वेषामपि मतानामेकरीत्या सर्वतः संप्रचारमन्वमन्यत । ८. विहाय सुखं वैषयिकं संपाद्यतामखिलैरपि धर्मोपासनानन्द इत्युपदिदेश । ९. मताध्यापनस्य सन्मार्गोपदेशस्य च माहात्म्यं बहुधा विवव्रे । १०. सत्यं मतं प्रचारयितुं ज्ञानिभिः प्रदर्श्यमानं पौरुषं महिमानं च सर्वात्मना प्रशशंस । ११. मतनिरूपणमेव माननीयं कृत्यमिति निश्चिकाय । १२. मतान्तरस्थानामपि न स्वातन्त्र्यहानिः कार्या, न वा निर्बन्धः; तत्त्वं विज्ञाय यदि सानुरागं प्रविशन्ति बुद्धमतम्, तदेव संमतमात्मन आशासनीयं चेति सर्वतः समुद्घोषमकारयत् । १३. कलिङ्गान् जिगाय । पञ्चानां यवननृपतीनामपि राज्येषु अन्यत्रापि बहुत्र भारते, बौद्धमतोपदेशिन आचार्यान्प्रेषयामास । १४. अस्मिन् हि शिलालेखे पूर्वोक्तानां विषयाणां संक्षेपः, शिलाशासननिर्माणप्रकारविवरणं च दृश्यते ।

एकदैव प्रकटितानि पूर्वोक्तानि चतुर्दश शासनानि विना अन्यान्यपि बहूनि शासनान्यशोकेन प्रकटितानि । धर्मोपासनापञ्चवार्षिको-

त्सवप्रभृतीनामनुष्ठानोपदेश एव तेषां शासनानां परमोऽभिसंधिः । एतेषु च शासनेषु किमप्येकं शासनमुपलब्धम्, यदस्य द्वितीयस्याः पत्न्या भक्तिं दानादिषु श्रद्धां च प्रदर्शयति । तेन चास्याशोकस्यानेकाः पत्नच इत्यूहितुमस्त्यवसरः ।

अन्ये चाशोकस्याष्टौ शिलालेखा उपलभ्यन्ते, ये स्तम्भेषू-त्कीर्णाः । तैश्चैवं ज्ञायते । यथा—१. धर्माधिकारिषु सर्वैरपि भक्त्या समुत्साहेन च वर्तितव्यमित्यादिदेश । २. दया, दानम्, सत्यम्, नैर्मल्यम्, इत्येतान्येव धर्म इत्युच्यन्त इति स्पष्टयांचकार । ३. आत्मशोधनमहापातकवर्जनप्रमुखान्गुणानुपदिदेश । ४. वध्यानां च वधात्पूर्वं भगवद्ध्यानाय त्रीणि दिनान्यवसरं ददौ । ५. नानाविधा-नामपि प्राणिनां हिंसां प्रत्यषेधत् । ६. प्रजाविषये स्वकीयमनुरागं सर्वतः समुद्घुष्य, सर्वेऽपि मतान्तरस्था यदि सप्रीति बौद्धं मतमनु-सरन्ति, तर्हि तदतीवाभिमतमात्मन इति स्वकीयमभिप्रायं सर्वविदि-तमुच्चैः प्रकाशयामास । ७. स्वकीयानि शासनानि धर्मोपदेशाश्च सर्वानपि जनान् सति पथि प्रवर्तयेयुरित्याशशंसे । ८. प्रजानां सुखाधानाय धर्मोत्कर्षाय च अशोकेन कृतानां सोत्साहकर्मणां विव-रणम्, ज्ञानोपदेशमात्रेणैवान्येषां बुद्धमतप्रवेशनमभिमतमात्मन इति तस्य प्रतिज्ञा च अस्मादन्तिमाच्छिलालेखादवगम्यते ।

दयया, दानेन, सत्येन, नैर्मल्येन, स्नेहेन, साधुतया च गुणेन एनमशोकमतिशयानः, तत्समो वा न भूपतिः कश्चिदपि पश्चा-त्परिवर्तिनि संसारे बहुभिरपि गणरात्रैः संबभूव ।



# आरोग्यप्रकाशिका ॥

---

ज्वलनशक्तिरपि जलवायोरस्ति नितराम्। एतद्वायुपूरितस्याधोमुखस्य ( अधोमुखत्वं चातिलघीयस्त्वान्नभसि भाण्डादनुत्पतनार्थम् ) पात्रस्यान्तरा काञ्चिज्ज्वलनेनोद्दीपितां वर्तिं यद्युपनयामः, तदा स वायुर्झटिति ज्वलितुमारभेत । तत्क्षणादेव सा तु वर्तिर्भाण्डस्यान्तरा प्राणवायोरभावान्निर्वापिता भवति । स वायुर्हि भाण्डमुख एव मन्दं मन्दं ज्वलति । अन्तर्निर्वाणमधिगतां तां वर्तिं पुनरपि तदैव यदि बहिरुपनयामः, सा तयैव ज्वालया सपदि समुद्दीपिता भवति । एवमस्मिन् वायौ संज्वलति सति, कतिपयक्षणानन्तरं भाण्डं यद्युन्मुखयामः ; क्षिप्रमन्तरवशिष्टो वायुः सभाङ्कारं संज्वलितुं समारभते ।

द्विगुणेन जलवायुना प्राणवायोः संयोगतः समुद्भवति सलिलम् । अतः सलिलमपि कश्चिन्मिश्रपदार्थ इति सिद्धम् । यदि न भवति नभस्येष वायुः, तदा शरीराण्यस्माकमतितरां रूक्षत्वमनुप्राप्नुयुः; सस्यवर्गाश्च प्रदग्धा भवेयुः । एवमस्मिन्नभसि समन्तादुपरि भुवः प्राणवायुः, लवणवायुः, इङ्गालवायुः, जलवायुश्चेति न केवलं चत्वार एव वायुपदार्थाः; अपि तु प्रमाणतोऽत्यल्पा मिश्रा अमिश्राश्च वायुपदार्थाः कतिचन विद्यन्ते । अंशतोऽत्यल्पीयस्त्वादेव न हि तेषामिह गणना क्रियते । प्राणवाय्वादयो भावाः स्वस्वप्रमाणतो नभसि यथार्हमभिव्याप्ताः सततमाकाशस्यातीव संशुद्धिमसञ्जीवनार्हत्वं चोपजनयन्ति ; प्रभवन्ति च बलमुपजनयितुमभिवर्धयितुमप्यायुरस्माकम् ।

## वायुः कथमशुद्धो भवति ?

जीवितसंरक्षणाय वायुरतीव प्रधानोपयोगी सन्नपि चेदशुद्धो भवति, स एव तर्हि जीवितविघाताय संपद्येत। यद्यपि सन्ति पृथिव्यां विविधा विषपदार्थाः, तथापि बहूनां जनानां जनपदानां वा सकृदेव आपज्जनकं विषमशुद्धो वायुरेव। अत एवाह जनपदोद्ध्वंसनीयाध्याये चरकः—'पवनादयश्च दुष्टाः परिहार्याः स्युः' इत्यादि। अत्र च सर्वविदितः कश्चिदैतिहासिको वृत्तान्तो दृष्टान्तीभवति। यथा—पुरा किल कलिकातानगरे कतिपयवत्सरेभ्यः प्राक् कस्यां चिन्निशीथिन्यां कालगुहाभिधाने (Black hole of Culcatta) कस्मिंश्चिदतिक्षुद्रे कारागृहे षट्चत्वारिंशदधिकशतं पुरुषाः संन्यरुध्यन्त। अनतिविपुलस्यास्य कारागृहस्य क्षुद्रं गवाक्षद्वयमेवाभूत्। परेद्यवि प्रभाते समुद्घाटितायां कवाटिकायां त्रयोविंशतिरेव पुरुषा गतागतायुषः, तस्याः कालगुहायाः कालमुखादिव कृच्छ्रात् निरीयुः। शेषाः सर्वेऽपि हन्ताकालजं कालधर्ममवापुः—इति। तावन्तोऽपि जना एकदैव दुष्टेन वायुना किलाहन्यन्त। भुवि अधुना दुष्टवायुना दुर्भागधेयानां तेषामिव, बहूनामेकपद एव तादृशी भैमरथीसमाना विपत् यद्यपि भवत्यल्पीयसी; तथाप्यशुद्धवायुना अनेके प्राणिनो यावज्जीवं दौर्बल्यमामयांश्च विविधाननुभवन्तो दुःखभाजनीभवन्ति।

## वायोरशुद्धीभावप्रकाराः।

तत्रैको निश्वासवायुराकाशस्य दूषकः। निरन्तरमस्माभिरन्तराकृष्यमाणस्योच्छ्वासवायोर्बहिर्विसृज्यमानस्य निश्वासवायोश्च विद्यते विशेषतो भेदः। शुद्ध्यपेक्षिणः सर्वेऽपि प्रत्यहं स्नानादिना शरीरं

बहिर्निर्मलीकुर्वन्ति खलु। बाह्यो वायुर्हि स्वयमेवास्मन्नासाद्वारा अन्तः-शरीरमभिप्रविश्य अन्तरवयवान् सम्यक् संशोध्य तत्र स्थितानि मलान्यपि बहिर्निष्कासयति। कथमेतदिति चेत्, इह संग्रहेण सम्यगभिधीयते—उच्छ्वाससमये नासामार्गेण प्राणिनामुरोगुहान्तरस्थमधुकोशाकारपुप्फुसद्वयाभ्यन्तरं (Lungs) बाह्यो वायुरनुप्रविशति। जिह्वामूलादारभ्य तरुणास्थिमयी नाड्येका (Trachea) अन्तर्वक्षोमूलं द्विधा विभज्य, पुप्फुसद्वयान्तरं क्रमशः शाखाभिरुपशाखाभिश्च सुसूक्ष्मतमाभिरसङ्ख्येयाभिरभिव्याप्य, अन्ततः श्वासाशयभित्त्या अन्तिके श्वासनाडीगुच्छत्वेन च बहुधा परिणमति। इमाः सर्वाश्च नाड्यः सततमभिपूर्णाः सन्ति वायुना। आसां च नाडीनामभ्यर्णे अपरिसंख्येयाः सुसूक्ष्मा रक्तनाड्यः प्रसरन्ति। आसां रक्तनाडीनां श्वासनाडीनां चोपर्यावृतयोस्त्वचोरत्यन्तसूक्ष्मत्वात्, रक्तनाड्यन्तरस्थेनाशुद्धेनासृजोच्छ्वासवायुः संयुज्यते। अशेषेभ्योऽप्यवयवेभ्यः समुच्चयेन समागतानि मलानि तत्सूक्ष्मत्वग्द्वारा बहिर्निरस्य, रक्तं प्राणवायुमुच्छ्वासानिलादाचूषति। बाह्याकाशादागतश्च वायुरान्तराणि मलान्यादाय पुनर्बहिर्निर्गच्छति। हृदयाद्रक्तनाडीभिः पुप्फुसान्तरागतमाविलमाकृष्णं च शोणितमेवंरीत्या निर्दोषं सुलोहितं सुखोष्णं च जायते। निश्वासवायुर्हि रक्तादिङ्गालाम्लवायुं कश्मलं च जलबाष्पं (Watery vapor) अन्यांश्च कांश्चिन्मलविशेषान् बहिर्निःसारयति। तत्रेङ्गालाम्लवायुर्बहिरन्तरिक्षेऽत्यल्पांश एवास्ति। निश्वासानिले तु ततोऽपि शतगुणमवतिष्ठते स वायुः। वायुरसावस्मद्दृशोरगोचरोऽपि हुतवहाद्धूम इवानवरतमस्मच्छरीराच्छ्वासमार्गेणोत्क्रामति। ज्वलने ज्वलति आवृतः कश्चित्प्रदेशो यथा क्रमात् धूमेनापूर्यते, तथा क्षुद्रे नीरन्ध्रे क्वचिदन्तर्गृहे स्वपता-

मस्माकं निश्वासानिलादुत्थितश्चेङ्गालाम्लवायुः समन्ततस्तमवकाशमशेषमभिव्याप्नुयात् । तत्र च यदि शुद्धो न वाति नवानिलः, तत्रत्योऽनेन विषवायुना क्षिप्रमेव ध्रुवं मार्यते। प्रदेशेषु च क्वचन पिहितकवाटस्यापि द्वारस्य गवाक्षस्य वा ऊर्ध्वाधःसंधिसंस्थितक्षुद्रसुषिरेभ्यः कतिपयेभ्यः समागतस्याल्पीयसः शुद्धवायोर्निश्वसनेन यद्यपि न हि जीवितहानिः संभवति, तथापि अस्मन्निश्वाससमुद्भूतविषवायुना प्रभूतेनाभिव्याप्तत्वादवकाशे च तस्मिन् स्वपतामस्माकं प्रायः प्रक्षीणारोग्याणां विविधा मूर्च्छाभ्रमतन्द्रानिद्रासंन्यासापस्मारा अन्ये वा वातविकारा बहवो नूनमाविर्भवन्ति । निश्वासमारुते च यदि प्रत्यक्षमवेक्षणीय इङ्गालाम्लवायुः, गृह्यतां तावत्कियदिव निर्मलं सुधोदकम्; (Lime water) तत्र च किंचिन्निश्वस्यतामस्माभिः फूत्क्रियतां वा । तदानीमेतन्निर्मलमम्भः सौधं क्रमादवाप्नोति श्वेतिमानं कालुष्यं च । यतः सलिलविलीनानां सुधापरमाणूनां निश्वामरुन्निष्ठस्येङ्गालाम्लवायोश्च संयोगत आविर्भवत्यन्यादृशः कश्चित्सुधेङ्गालाभिधो मिश्रः पदार्थः (chalk) । अयमम्भसि न हिं सुधादिवद्विलीयते । अतोऽयमविलीन एवोपजनयत्युदकस्य तस्य पाण्डुरत्वं कालुष्यं च। न ह्यविलीनसुधास्वप्सु आविर्भवतीदृशमाविलत्वमथवा शौक्ल्यम् । निश्वासानिले विद्यमानं द्वितीयं द्रव्यं जलबाष्पम् ।

**जलबाष्पम्**— विमलमसृणेषु शिलाफलकेषु दर्पणादिषु वा निश्वसनेन परिदृश्येरन् परमाणवः पयसाम् । शरीरान्तरान्निर्गच्छन्तः सलिलानामिमेपरमाणवः कश्मलपदार्थैर्विषनिर्विशेषैः सन्ति नितरां कलुषाः ।

(क्रमशः)

## वनभोजनम् ॥

नेदं परोक्षं प्रज्ञावताम्, यत्प्रतिहायनं जनपदेषु आमलकीं सविशेषमर्चयित्वा, तस्यै षड्रसोपेतमन्नं निवेद्य, शर्करान्नपायसपरिपूर्णानि पात्राणि च भूसुरेभ्यो वितीर्य, तद्भूरुहस्य अधोभाग एव सह मित्रबन्धुवर्गैः सजग्धिकेलिकामनुभवन्ति सुधिय इति । इदमेव वनभोजनमित्यभिधीयते । अत्रेयं ब्रह्मपुराणान्तर्गता कथा अनुसंधेया ।

पुरा किल शचीपतिरुमापतिं द्रष्टुकामः कैलासमगच्छत् । तत्र गृहीतकपटवेषः पश्यतामपरः कश्चित्साधारणो जन इव दृश्यमानः परमार्थतः परमेश्वर एव तस्य नयनगोचरो बभूव । दृष्ट्वा च तमपृच्छत्सावलेपं कुत्र पशुपतिरिति । भगवांश्चन्द्रशेखरस्तु न किमप्यवदत् । पुनः पुनरभ्यर्थितोऽपि मूकिमानमेवानुतिष्ठन्तं नागभूषणं वीक्ष्य जातामर्षः कुलिशधरः कुलिशेन मृत्युंजयमास्कन्दितुमारेभे । तथारभमाणे कुलिशधरे, विरूपाक्षस्य फालनेत्रात् स्फुलिङ्ग आविर्बभूव । वृत्रहा तु त्रिभुवनभयंकरस्य मारदाहकस्य फालनेत्रस्फुलिङ्गस्य वेगावेशमसहमानः सन्नचेतनो धरायां पपात । ततः सुराचार्यो बृहस्पतिर्वृत्तान्तं सर्वं परोक्षमप्यपरोक्षमिव ज्ञानचक्षुषा विदित्वा पुरुहूते संजातकरुणो भगवन्तं भवानीपतिं स्तवैः प्रीणयामास । तदनु धिषणकृतनुतिप्रहृष्टमनाः प्रमथाधिपः स्फुलिङ्गं तमर्णवे न्यक्षिपत् । सोऽप्यर्भको बभूव । ततः सर्वप्राणिभयावहं शिशो रोदनरवमाकर्ण्य, समुद्रराजेन सह सद्य एव प्रादुर्भूय, बालस्य सौन्दर्यातिशयेन परमानन्दस्य परां कोटिमारुह्य, तं शिशुं स्वोत्सङ्गे निक्षिप्य, बालक्रीडावलोकन-

सुखमनुभवति स्वयंभुवि, लीलयैव विश्वसृजः केशपाशं गृहीत्वा किंचिदिव कम्पयति चार्भके, एकपद एव समागतनदीप्रवाह इवाश्रुनिष्यन्दो भूषयांचकार विधातुर्नयनयुगलम्, पस्पर्श च बालम्। तेन तस्य डिम्भस्य जलंधर इति यथार्थं नाम अभूत्। ईश्वरकोपजनितफालनेत्रस्फुलिङ्गसंजातत्वेन च अतुलबलसमन्वितः, अपरिमितभुजपराक्रमोऽसुरो बभूव।

सुरज्येष्ठोऽपि नगरमेकं निर्माय, राज्ये तमभिषिच्य विश्वविश्वम्भराभारवहने नियोजयमास। सा पुरी 'जलन्धरपुरी' इत्याख्यया प्रख्याता अभूत्।

ततः संप्राप्तयौवनो जलन्धरः, रूपसंपदमिव विग्रहिणीम्, पातिव्रत्यैकतानाम्, अखिलगुणमनोहारिणीम्, बृन्दारकवनितामपि धिक्कुर्वाणां बृन्दां नाम कालनेमिपुत्रीं पाणिगृहीतीं कृत्वा, सर्वाङ्गरमणीयया रमण्या तया सह युवजनोचितसुखमनुभवन्नास्त।

अथ 'अनतिसुलभमपि वस्तुजातं समुद्रं मथित्वा अपजहार वज्री' इति मनसि शत्रुभावं कृत्वा, तेन सह समरायामरापुरीं जगाम। तत्र च समजनि सुरासुरभीषणं संख्यावद्भिरप्यनूह्यमानजयपराजयमदृष्टचरं वज्रधरजलन्धरयोरायोधनम्। तदनु भार्गवस्यासुरगुरोः प्रचोदनेन अमराणां प्राणहेतुभूतं द्रोणाचलं पारावारे चिक्षेप जलन्धरः। प्राणहेतुभूते द्रोणाचले परोक्षतां गते, असुरराजस्य पुरतः स्थातुमपारयति दिशि दिशि कान्दिशीकतां भजति च बृन्दारकबृन्दे, शुनासीरपुरःसराः सुराः समीहितार्थसिद्धये नारायणचरणारविन्दं शरणं प्रपेदिरे।

अथ गजेन्द्रसंरक्षके पुण्डरीकाक्षेऽपि कुशलानुयोगपुरःसरमभयप्रदानेन तान् समाश्वास्य संप्रहाराय सन्नद्धे सति, गाढालिङ्गनेन प्रणयातिशयं सूचयन्ती पद्मालया पद्माक्षमिदमाबभाषे—'देव, यदि नाम जनार्दन इति यथार्थं नामधेयं वहति भवान्, तर्हि न जातु हन्तव्यो मम भ्राता जलन्धरः' इति । तदनु कमलनयनः कमलाया वदनकमलाद्विनिःसृतं रमणीयवाङ्मकरन्दं सानन्दमास्वाद्य सस्मितमिदमुवाच—'देवि, किं त्वं न जानासि परिदेवनां देवानाम्? नाहं तं हनिष्यामि; किन्तु दुष्टनिग्रहशिष्टपरिपालननियमानुरोधेन दुष्टात्मना तेन सह योद्धुमेव गच्छामि' इति । एवं सरसचारुवचनैः पुण्डरीकाक्षश्चारुनयनां लोकमातरं सान्त्वयित्वा सह हरिहयप्रमुखैर्देवैर्युद्धाय प्रतस्थे; वृत्रासुरेण सुत्रामेव जलन्धरेण वितेने च विचित्रमायोधनम् । तत्र असुरपतेर्युद्धकौशलं हस्तलाघवं च वीक्ष्य, निधाय च मनसि रमाया वचनम्, तस्य दुष्टात्मनो निधनान्मनो निवर्त्य, 'जलन्धर, तव युद्धकौशलं हस्तलाघवं च दृष्ट्वा नितरां संतुष्टोऽस्मि । वृणीष्वाभिलषितं वरम् । दास्यामि' इत्यकथयत् । जलन्धरश्च 'भगवन्, सहेन्द्रादिदेवगणैर्जलन्धरपुरी भवता रक्षणीया' इत्ययाचत । केशवोऽपि दुष्टात्मनो जलन्धरस्य भावि निधनमाकलयन्निव तथेति प्रतिज्ञाय, प्रतिज्ञां सफलां चकार ।

एवं वासवपुरोगमान् दिविषदः स्ववशीकृत्य स्थलकमलिनीं वनवारण इव त्रिलोकीमप्यभिभूय प्रशासति वसुमतीं जलन्धरे, कदाचिद्देवानां हितमिच्छन् 'कपटकर्मपटिष्ठो दुष्टः कपटेनैव वञ्चनीयः' इति छलेन जलन्धरस्य निधनमभिलषंश्च भगवान्नारदो मुनीनामग्रणीः समितिं तस्य समुपागतः । अथ सुदुर्लभतमब्रह्मर्षिसमागमला-

भहर्षपरवशो जलन्धरोऽपि प्रणतिपूर्वकं महात्मनस्तस्यासनं दत्त्वा, अर्घ्यपाद्यादिभिर्यथाविधि सपर्यां संपादयामास । ततः सीमातीतमहिमा स मुनिपुङ्गव इत्थं प्रवर्तयामास गिरम्— 'वत्स जलन्धर, अहमद्य कैलासमगच्छम् । तत्र कुसुमशरस्य विजयपताकेव, लावण्यस्य प्रतिकृतिरिव, अपहसितरतिः पार्वती मया दृष्टा । तद्रूपवर्णने सहस्रवदनः शेषोऽपि नालम्, किमुतायं साधारणो जनः । पतिस्तु तस्याः कपाली । शरीरं साकल्येन सर्पैर्भूषयित्वा पश्यतां नितरां भयमावहति । भिक्षामटति । पितृवनमेवास्य विशिष्टमधिष्ठानम् । तत्सर्वथा न स तस्याः प्रेमास्पदं भवति । त्वं तु, भुजबलविजिताखिलपरिपन्थिपार्थिवः सार्वभौमो युवा धीरो सर्वातिशायिपराक्रमश्च । ततः सुखेन सा आनेतुं शक्या । अवश्यं च सा त्वयाधुनैव द्रष्टव्या' इति । एवं बहुधा पार्वतीसौन्दर्यप्रशंसया कामाग्नौ कामुकं जलन्धरं पातयित्वा नारदस्तिरोदधे ।

अथ बुधजननम्यां लोकमातरं दुर्गामभिलषन्तं कैलासं प्रति प्रयाणोत्सुकं जलन्धरं विनयावनमितशिरोभागा वृन्दा साञ्जलिबन्धमिदमवादीत्— 'आर्यपुत्र, यद्यपि देवेनाविदितं न किंचिदस्ति; तथापि प्रणयातिशयेनानितरसाधारणभर्तृभक्त्या चेदमावेद्यते । तत्सावधानं निशमयत्वार्यपुत्रः । न कदापीदं साहसमनुष्ठातव्यम् । अपि नामानुरूपमिदं संप्राप्तसकलसाम्राज्यसौख्यस्य भवतः पराङ्गनालाभचापलम्, कामपाशबन्धनं च । न भवान्न जानाति परवधूगृध्नुतयैव परिभवमधिगतौ पुरन्दरशशधराविति । परयोषित्सङ्गमदोषदावानलो हि कुलं निर्मूलं निर्दहति । कुपथगामिमनोनियन्त्रणं खलु विदितवेद्यानां परं भूषणम् । अपि च, देवी पार्वती तु जगतामाधारभूता परा शक्तिरदृग्गोचरा च । मोघ एवायमुद्यमः । तत् कृपया निवर्तितुमर्हति

व्यवसायादस्मादार्यपुत्रः' इति। एवं सविनयं सप्रणयं सोद्वेगं चोपदिशन्त्या धर्मदेवताया इव जायाया धर्ममन्त्रणमप्यगुर्वर्थमेतदिति न्यक्कृत्य, स्वप्राणात्ययमविगणय्य, पतिदैवतां तां गाढमाश्लिष्य 'दयिते, किमियमस्थाने कातरता संतापश्च? अपि नाम त्रैलोक्यविजयिनोऽकुतोभयस्यापि ममेमौ पादौ पदात्पदमपि चलतः? नातिचिरादेव पार्वत्या सह आगच्छामि। पश्य मम साहसं युद्धकौशलं च' इति साटोपमुदीरयतः प्रियंदयितस्य अशनिपतनकल्पं वचनमाकर्ण्य विषीदन्त्या जायया पौनःपुन्येन भणितानि प्रणयबहुविधनीतिनिदर्शनगुम्फितान्युदर्कमधुराणि वचनानि न तस्यासुरस्य हृदये अवकाशं लेभिरे।

देवी बृन्दा तु भाविपतिनिधनचकितस्वान्ता, गत्यन्तराभावेन मूकिमानमेव भजन्ती 'नूनमचिरेण शुभेतरत्किमप्यापतिष्यति' इत्यन्तः पस्पन्दे।

अथ वेदैकवेद्यस्य भगवतो भवानीपतेर्याथातथ्यमविज्ञायैव निकषा शंकरमुपगम्य, 'अयि मूर्ख अनवद्याङ्गीयं तन्वी नार्हत्येव तव निकटे स्थातुमपि। तदुत्सृज ताम्। न चेत्समराय संनद्धो भव' इति सोपालम्भं भाषमाणं दुरात्मानं जलन्धरं प्रमथाः सर्वेऽपि परिवव्रुः, चक्रिरे चातिभयंकरं युद्धम्। भगवांश्चन्द्रशेखरोऽपि तन्निधनायैव सुदर्शनं नामायुधं निर्माय समयं प्रतीक्षमाण आस्त। किन्तु बृन्दादेव्याः पातिव्रत्येन विसंवादितः प्रयत्नः प्रमथाधिपस्य प्रमथानां च।

अथ मोहनास्त्रेण महेश्वरमपि मूर्च्छयित्वा, मायाबलेन पार्वतीशस्य वेषं धृत्वा, अवरोधं प्राप्य, कात्यायनीं च निरीक्षमाणः क्षणं विस्मयेन साध्वसेन च जडीकृतो जलन्धरः। दुष्टासुरस्य चित्तचेष्टां विदित्वा, असुरनयनगोचरातीतं कमलनयनमुपगम्य, 'भ्रातः,

अपि नाम साम्प्रतमेवंविधायामवस्थायां निपतितां मां द्रष्टुम्' इति ससम्भ्रममाभाष्य पुरतस्तिष्ठन्तीं पार्वतीम् 'वत्से मा भैषीः । असुर-पतेर्जायायाः पातिव्रत्येनैवेमां दशां प्रापितः कैलासः' इत्यवदज्जना-र्दनः । तदाकर्ण्य 'अयि भ्रातः, यथाकथंचिदपि तस्य दुरात्मनः प्रियायाः पातिव्रत्यमुच्छिद्य ममेयं दुरवस्था भवता दूरीकरणीया' इत्येवं व्याहरन्त्याः पार्वत्याः शोकोदग्रां वाचं निशम्य, निशाम्य च चेष्टितानि जलन्धरस्य, करुणापूरितहृदयो नारायणो बृन्दादेव्याः पातिव्रत्यभङ्गाय जलन्धरपुरीं प्रति प्रस्थाने मतिमकरोत् ।

जलन्धरपुर्यां बृन्दादेवी तु प्रियविरहमसहमाना, रमणमेव परमाभरणं मन्वाना, विमुक्ताभरणा, मलीमसाङ्गी सती 'नाथ, कथं चिरयसि । कदा वागत्य मन्नयनयुगलमिमं प्रासादं च परितोषयि-ष्यसि' इति तपनकिरणतप्यमानमृणालीव शोकेन परितप्यमाना स्वप-र्यङ्के परिलुठन्ती, प्रियागमनं प्रतिपालयन्ती, अल्पमपि समयमति-दीर्घमिव कृच्छ्रेण यापयन्ती, कदाचित् डोलाक्रीडामनुभवन्ती, अत-र्कितमेव समये तामुपसृत्य ग्रहीतुकामौ दानवौ ददर्श । दृष्ट्वा च संशयदोलारूढा सती सुदूरं द्रुतं गत्वा, तत्रैकत्र तपश्चरन्तं तपस्वि-नमेकं निरीक्ष्य, तत्पदारविन्दयोः पतित्वा 'तपोनिधे, शरणं शरणम्' इति बाष्पगद्गदं चुक्रोश । तथा क्रोशन्तीं तपस्विनीं बृन्दाम् 'अयि वत्से, मा शुचः । नाहं त्वां मुञ्चामि' इति सान्त्वयत्येव तपोनिधौ, अदृग्गोचरौ बभूवतुर्दानवौ ।

अथ सद्य एव हृदयदयितस्य दयितस्योत्तमाङ्गमुदरं च पुरतः प्रक्षिप्य धावन्तौ शाखामृगौ वीक्ष्य, भर्तुर्निधनमाकलय्य भीतभीता सती, पवनाहतलतेव धरायां पपात बृन्दा । निपत्य च

'नाथ अनवधार्यैव मद्वचनं कैलासमगमः किल । किं तस्य फलमिदम्? अकाण्ड एव त्वया विप्रयुक्ता अनाथास्मि संवृत्ता' इति नयनकमलयोर्बाष्पधारां विमुञ्चन्तीं वृन्दां वीक्ष्य, 'तन्वि, कुतोऽयं मनस्तापः, चित्तोद्वेगश्च । पश्यन्त्या एव तव दयितः सचेतन उत्तिष्ठति । पश्य' इत्याश्वासयन् मन्त्रपूर्वकेण जलेन परेतं तं तपस्वी असिञ्चत् । तत्क्षण एव तापसं परेतं चापश्यन्त्याः करेण करं गृहीत्वा 'अयि दयिते प्रासादादेकाकिनी क्व प्रस्थितासि । कथमियं कातरता । केनापकृताऽसि । अवरोधमेव गच्छावः' इत्युदीरयन्तं कान्तं च पश्यन्त्यास्तस्याः कियानिव विस्मयः प्रमोदश्चासीदिति वर्णयितुं नास्ति वागवसरः । अचिन्तयच्च सा 'मत्पातिव्रत्येनैव भगवन्तं भवानीपतिमपि विजित्य निराबाधं नगरमुपागमद्दयितः' इति । अथ दैवादापतितान्यरिष्टानि क्रमेण जगाद । मायावी भगवांश्च प्रगाढं तामालिङ्ग्य सरसचारुवचनैः शृङ्गारलीलाभिश्च समयं यापयन्, तस्याः करपल्लवममुञ्चन्नेव, 'दयिते अहमेव त्वद्भक्तिं विमर्शयितुकामः क्षणं खेलामकार्षम् । मां विना कः पुनस्तव करौ ग्रहीतुं पारयति' इत्येवं सोल्लासं वचनवैचित्र्येण वृन्दां प्रत्याययंश्च, सह तया प्रासादं विवेश । अथ महार्हैर्दिव्याभरणैः कलेबरं भूषयित्वा, ऐकमत्येन कुसुमबाणचापलानि सफलीकुर्वतोस्तयोः क्षणमिव क्षीणतामयासिषुरनेके दिवसाः ।

ततः कदाचित्सुरतान्ते रमणं निजरमणादन्यं मन्वाना चकितचकिता सहसैव ससंभ्रमं मञ्चं विमुच्य सुदूरे स्थित्वा, 'अयि वञ्चक, जनार्दन इति नामधेयं वहता कपटवेषधारिणा त्वयेमां दशां गमितास्मि । किं न जानासि पातिव्रत्यमेव परं भूषणं योषितामिति । पातिव्रत्यरहितानामबलानां जीवितं हि निकृष्टतमम् । तत्किमनेन जीवि-

तेनेतः परम् । अद्यैव शरीरं वैश्वानरे पातयामि । यतस्त्वयाहमीदृशी-मवस्थां प्रापिता, ततस्त्वद्भार्यापि राक्षसैरपहृता भविष्यति । त्वमपि प्रियाविरहादहमिव परितप्स्यसे । ध्रुवं ध्रुवम्' इति शप्त्वा अवरोधमगच्छत् । भगवांस्तु तथा गच्छन्तीं तां वस्त्राञ्चले गृहीत्वा, 'हृदय-दयिते, मां कामाग्नौ पातयित्वा अकाण्ड एव तव विप्रयोगस्यास्य नायं समयः' इत्यनुनयन् तामेवानुससार । तपस्विनी बृन्दा तु तमगणयित्वा, तत्क्षण एवाग्निमुत्पाद्य निपत्य भस्मीभूता । ततो माधवस्तद्वियोगं सोढुमपारयन्, तस्मिन्नेव भस्मनि परिलुठन्नास्त । विदित-बृन्दापातिव्रत्यभङ्गः परमेश्वरोऽपि सुदर्शनेन जलन्धरं पातयामास ।

तदनु वैकुण्ठे वैकुण्ठमपश्यन्त उद्विग्नमनसः पितामहादयो दिविषदः कैलासं प्राप्य गिरिशाय वृत्तान्तं सर्वमपि विज्ञापयामासुः । गिरिशस्तु 'परां शक्तिं विना न केनापि माधवः प्रत्यानेतुं पार्येत' इत्यवादीत् । ततः परां शक्तिं द्रष्टुं व्रजति देवगणे, गौरी सरस्वती लक्ष्मीश्चैकत्र मिलिता नयनगोचरा बभूवुः । देवाश्च विदिताखिलेति-वृत्ताभिर्देवीभिः पर्यायेण समर्पितानि बीजानि यथानिर्दिष्टं भस्मसात्कृताया बृन्दायाः प्रदेशमभिगम्यावपन् । तेषु बीजेषु गौर्या दत्तं तुलसी, लक्ष्म्या समर्पितं मालती, सरस्वत्या दत्तं बीजमामलकी च प्ररूढमदृश्यत । स प्रदेशोऽपि अतिविशङ्कटेन वनेन परिणाममभजत । तदेव वनमद्यापि 'बृन्दावनम्' (बृन्दायाः वनम्) इत्याख्यायते । तत्र प्ररूढाः सर्वेऽपि वृक्षा विष्णुना बृन्दारूपेणादृश्यन्त ।

अथ पार्श्वयोरुभयोरपि तुलस्यामलक्यौ, लक्ष्मीं च वक्षसि विन्यस्य विराजमानं नारायणं वैकुण्ठे दृष्ट्वा आनन्दकोटिमधिगता देवा भगवन्तमीडाञ्चक्रिरे । लक्ष्मीदेव्या ईर्ष्यासंभवेन मालती परं

भगवत्सायुज्यमेवाधिगता । अत एवामलकी तुलसी च पूजार्हौ भूरुहौ, मालत्याः पुष्पाणि सपर्यार्हाणि चाभवन् ।

अतः कार्त्तिके मासि योगीश्वरद्वादशीति प्रख्यातायां द्वादश्यामामलकीं भक्तिपूर्वकमर्चयित्वा, ये महाभागास्तदधोभाग एव भुञ्जते, ते नारायणस्य करुणापाङ्गदृशा तत्सायुज्यमेवाधिगच्छन्ति । तुलसीं ये महान्तो गृहे पूजयन्ति, ये च बद्धश्रद्धास्तद्दलैर्नारायणमर्चयन्ति, तेऽपि धनधान्यादिसकलसम्पत्समृद्धा इह चिरं सुखमनुभूय परतश्च मुक्ता भवन्ति ।

कन्दाडै. रामस्वामिशर्मा ।

## लोकरहस्यम् ॥ *

### प्रथमप्रबन्धः ।

कालो हि नाम कोऽपि स्वतन्त्रः कर्ता; स हि किं किं न कारयति, किं किं न श्रावयति, किं किं न संविदधाति ?

---

* श्रीमतः सुगृहीतनाम्नो वङ्गभाषाख्यायिकालेखकस्य बङ्किमचन्द्रचट्टोपाध्यायस्य रचनास्वत्यद्भुतं किमपीदं रत्नं लोकरहस्यं नाम । तत्र च प्रबन्धाकारतया बहवो विषया अनुवर्णिताः । तेषु च कतिचन श्रीमतास्मत्प्रियसुहृदा कर्णाटकभाषाभट्टबाणेन B. वेङ्कटाचार्यमहाशयेन स्वीयया भाषयानूद्य प्राकाशिषत । तेषु कांश्चन विषयान्वयं तस्य महाशयस्यानर्घयाभ्यनुज्ञया संस्कृतभाषयानूद्य सहृदयाप्रणयिभ्य उपहर्तुमिच्छामः । प्रबन्धे चात्राधुनातनानां समाजस्य दशा मनोहारिण्या गमनिकया प्रदर्शितेति वाचनेनावगम्येत ।

आसीदशेषलोकविदितगुणं सुन्दरवनं नाम किमपि काननम् । तत्र च बहव एव शार्दूलमहाशया वंशपारंपर्येण प्रतिवसन्ति । कालस्य च वैभवेन सर्वत एव प्ररूढे नागरकभावे ते च महामहिमानो महता व्यवसायेनोत्तरोत्तराभिवृद्धौ प्रायतन्त । गतानुगतिको हि सर्वः । समाजवृद्धेश्च सभामेलनम् उपन्यासाचरणं च मुख्यं साधनमव्यभिचारि सर्वसंप्रतिपन्नम् । तत एतेऽपि तत्र कानने महतीं कामपि सभां सममेलयन् । सर्वः किल समुन्नतिमकाङ्क्षति कुतुकी । यथानिर्देशं च सर्वे सादरं समागताः समये । नैवैतैर्भारतीयानां सरणिरनुसृता । अस्खलितं निर्दिष्टे समये सर्वे संन्यदधुः । निबिरीसनानातरुनिकरशोभितस्य तस्य सुन्दरवनस्य मध्ये प्रशस्ते समे विस्तृते भुवो भागे भीषणाकारा नानाविधा व्याघ्रा लाङ्गूलारोपितसर्वभाराः प्रकाशं विसृत्वरीभिर्दंष्ट्राप्रभाभिर्वनमखिलमवभासयन्तो बद्धपङ्क्तयः समुपाविशन् । सर्वे चैकमत्येन श्रीमन्तं वर्षीयसममितोदरनामानं स्वजातिमहत्तरमग्रासने आस्थापयन् । स च साङ्गीकारं लाङ्गूलासनमास्थाय सभाकृत्यानि प्रारभत । प्रथममसौ धन्यवादानात्मीयेभ्य उपहृत्य भाषितुमेवमारभत ।

'अयि स्वकुलभूषणमहाशयाः ! अद्य नः सुप्रभातम् । अद्यत्वे किल वयमारण्यका मांसशोणिताहारा व्याघ्रमहर्षिवंश्याः परस्परेण स्वकुलाभिवृद्धिप्रणयेनास्मिन्काननोद्देशे संमिलिताः स्मः । अहह ! कुत्साकारिणः खलस्वाभावाश्च पशवोऽपरे सर्व एवास्मानसामाजिकान्विविक्तवासैककुतुकिन ऐकमत्यरहितान्स्वार्थैकपरायणानुपालभन्ते । अन्याय्योऽमूलकश्चैवायमपवादः । परमयं मनुष्याणां भारतीयानां स्वभावः ; न नूनमस्माकम् । तं च ते नूनमस्मास्वारोपयन्ति । किमन्य-

देते कुर्वन्तु । ते हि स्वपक्षपातविषयेषु तेषु विद्यमानमेनं गुणं दुरपह्नवं कथमभ्युपगन्तुं प्रभवन्तु? अस्त्वेतत् । सत्यसति वा दोषे भूयोभिराकृष्टे प्रवाहन्यायेन चास्मिन् प्रसरति तस्य परिहारोऽप्यवश्यमाधेय एव धीमतेति निर्मूलमप्यपवादमेनमुन्मूलयितुं वयमधुनेह सभायां मिलिताः स्मः । यथा चायमस्माकमपवादो मत्सरिभिरपि दूरीक्रियेत, तथा नामास्माभिः स्वश्रेयोभिवृद्धौ सभ्यताप्रथायां च प्रयतमानैः सुखेनैव सभ्यजातिष्वग्रगण्यैर्भूयेतेति विश्वसिमि । अत्र च नास्ति मात्रयापि संशयस्यावकाशः । अथ च वयमधुना सर्वजगत्स्रष्टारं परमकारुणिकं परमेश्वरमभ्यर्थयामहे— प्रतिदिनमप्यस्मान् स्वजातीयहितैषितां प्रकाशयतः परमेण सुखेन नानाविधान्पशून् निघ्नतः सत्स्वभावेन सद्वृत्त्या च कालं यापयतोऽप्रतिहतमनोरथाननुगृह्णीष्व— इति ।'

(सभायां लाङ्गूलानां चटचटात्कारः सर्वमपि वनं मुखरयति स्म ।)

अयि भ्रातरः! यस्योद्देशेन वयमत्र मिलिताः स्मः, तमाधिकृत्य संक्षेपात् किमपि निवेदयामि । सुन्दरवनमिदमधिवसत्सु व्याघ्रेषु विद्याचर्चा क्रमेण लोपमातिष्ठत इति ननु विदितमेवेदं भवताम् । महानेव ममाभिलाषः—सर्वैरस्माभिर्विद्वद्भिर्भाव्यमिति । अद्य किल सर्व एव विद्वांसो भवन्ति । तथैव कुतो नास्माभिरपि विद्वद्भिर्भवितव्यम् । विद्यालोचनायैव किलेयं सभा प्रतिष्ठापिता । इदमखिलैरपि भवद्भिरनुमोदनीयमित्येतदेव ममाभ्यर्थनीयम् ।

एवं चोपन्यस्य स्वासनमास्थिते सभापतौ सभास्तारः सर्वे 'हा उ मा उ' इति शब्दायमानास्तमंशमन्वमोदन्त । अथ च यथाक्रमं केचन प्रबन्धाः पठिताः सभ्यैरनुमोदिता अङ्गचकारिषत ।

अनुमोदमानाश्च दीर्घदीर्घां वक्तृतां प्राकाशयन् । सर्वापि सा व्याकरणशुद्धा सालङ्कारा चाभवत् । शब्दरचना परं भीषणावर्तत । डम्बरेण चानेनं वनं तदखिलमपि चकम्पे ।

यदा चान्यान्यानि सभायाः कृत्यानि समाप्नुवन्, तदा सभाध्यक्षः पुनरेवमाबभाषे—'भ्रातरः! सुन्दरवनेऽस्मिन् बृहल्लाङ्गूलनामा कोऽपि ख्यातः पण्डितो व्याघ्राचार्यमहाशयः प्रतिवसतीति श्रुतपूर्वमेवेदं भवताम् । स महामतिरधुना मदीययाभ्यर्थनया मनुष्यचरितानुबन्धिनं कमपि प्रबन्धमस्यां रात्रौ सभायामस्माकं परिपठिष्यति' इति। मनुष्यनामग्रहणेन चानेन केचन सभास्ताराः क्षुधमबुध्यन्त । अथापि न तदात्वे प्रकाशभोजनस्य (public dinner) सूचना अदृश्यतेति सर्व एव शान्ता अभवन् । अथ सभाध्यक्षेण सबहुमानमाहूतो बृहल्लाङ्गूलाचार्यमहाशयः समुपगम्योपन्यासकपीठं पथिकभयङ्करेण स्वरेण प्रबन्धमेनमपठत् ।

'सभाध्यक्षमहाशय! व्याघ्रीणां व्याघ्राणां च समवायाः! अहमिह तत्रभवतः स्वकुलहितैषिणः सभाद्ध्यक्षमहाशयस्यादेशेन दैवसृष्टेषु जन्तुषु कमपि विभागमधिकृत्य प्रबन्धं कमपि भवतः श्रावयितुमुद्युञ्जे। महत्तराः! दैवेन सृष्टाः किल जन्तवो द्वेधा विभागमातिष्ठन्ते। केचित् चतुष्पादः, केचिच्च द्विपदाः । मनुष्या हि नाम द्विपदजन्तव एव। न तेषां पक्षौ विद्येते इति न तेषु पक्षिव्यवहार उपपन्नः। विशेषतश्च चतुष्पाज्जन्तूनां मनुष्याणां च बहुलं सादृश्यमनुदृश्यते ।

(क्रमशः)

श्रीशैलताताचार्यः ।

प्रकृतिमापन्नेनेव चक्षुषा सुचिरम्, उपजातप्रत्यभिज्ञानलव इव सत्वरोपसंहृतगतिः, आचरणयुगलादुत्तमाङ्गं यावदालोकितवान् ॥

आनीतकरसंपुटश्च हेमाद्रितट इव पृथुश्रीवृक्षलाञ्छिते वक्षसि, स्तोकमुपदर्शितस्मितः प्रस्तुतपरीहास इव सलिलनिर्भराम्भोधरनिनादगम्भीरेण स्वरेण मधुरमब्रवीत्— "नरेन्द्र, सर्वदा शरीरसंनिहितैर्निवेदितोऽसि चक्रवर्तिलक्षणैः । स खलु भवान्मध्यमलोकपालो राजा मेघवाहनः, योऽस्माभिः पुरा दिव्यसदसि देवस्य पाकशासनस्य मर्त्यलोकवार्तानिवेदनाधिकारयुक्तैः प्रधाननाकिभिः, एवं जिगीषुः, एवं शूरः, एवं त्यागशीलः, एवं धार्मिक इति बहुप्रकारमङ्कुरितपुलकपक्ष्मलकपोलैरवनिपालकथाप्रक्रमे सुचिरमुपवर्ण्यमानः श्रुतोऽसि । सर्वथा नः कृतार्थं चक्षुरुपजातम् । फलितं च सद्यो देवतादर्शनसमुत्थं पुण्यजातमतर्कितोपनतेनामुना त्वदवलोकनेन । गच्छामि सांप्रतम् । अनुजानीहि माम् । जानीहि च मदीयमपि लेशतो वृत्तान्तम् । अहं हि सौधर्मसुरलोकसद्मा ज्वलनप्रभाभिधानो वैमानिकः । संप्रत्येव नाकतः प्रस्थितो गच्छन्पुरःस्थितेन कियतापि परिजनेनानुगम्यमानो गगनपथेन, पथि विलोक्य लोकान्तरे देवतायतनमिदम्, इदं मनस्यकरवम्— 'हन्त, स एष भगवानशेषजगन्नाभिः, नाभिकुलकरकुलालंकारः, द्रष्टा कालत्रितयवर्तिनां भावानाम्, उपदेष्टा चिरप्रणष्टस्य धर्मतत्त्वस्य, सर्वसत्त्वनिर्निमित्तबन्धुः, सेतुबन्धः संसारसिन्धोः, ऋषभनामा जिनवृषः; यस्य पुरा स्वामिना शक्रेण स्वयमनुष्ठितः प्रतिष्ठाविधिः ।'

---

**आनीतेति ।** श्रीवृक्षः वक्षसि स्थित आवर्तविशेषः, पक्षे अश्वत्थवृक्षः बिल्ववृक्षो वा । नाभिः प्रधानभूतः । नाभिकुलकरः नाभेयः ।

T 4

अवधार्य चैतदधिकोपजातभक्तिः, 'आसतामिहैव मुहूर्तमेकं भवन्तः' इति निवर्त्य पृष्ठानुपातिनः सुरपदातीन्, अतिमात्रमुत्सुको गन्तुमङ्गमात्रेणैवागतः । दृष्टश्चैष भगवानशेषकल्मषक्षयहेतुरादिदेवः । इदानीं गन्ता अहमधिगतनिर्वृतिः, विलक्षणं रामणीयकेन सकलद्वीपानाम्, अपारजलपूरितान्तरिक्षेण सर्वतः कृतपरिक्षेपं नन्दीश्वरोदनाम्ना नदीनाथेन, नन्दीश्वराभिधानं प्रधानद्वीपम् ॥

तत्र मे परममित्रम्, ममैव सदृशप्रभावर्द्धिः, अतिशयेन प्रसादपात्रं वृत्रशत्रोः, अत्युदाररूपबलविभवशाली सुमाली नाम देवः, देवलोकतः कौतुकाकृष्टमनसा स्वयंप्रभाभिधानया देव्या दिव्यवनिताजनादुपश्रुतरम्यतातिशयां जिनायतनविंशतेः श्रियं द्रष्टुमानीतः, सांप्रतमतिशयितनन्दनवनेषु महापुष्करिणीनामुपान्तवर्तिषु विचित्रतरुकाननेषु कान्तासखः क्रीडासुखमनुभवति ॥

अस्ति च द्वीपे तत्र दीपभूता मर्त्यलोकस्य, जिनायतनयात्रासु त्रिदशलोकादुपागतानाममरमिथुनानां निवासस्थानमपरेवामरावती, परमरम्या रतिविशाला नाम तस्य नगरी । सा चाद्य प्रातरेव कौतुकादितस्ततो विचरद्भिरनुचरैर्मदीयैः, तदीयसंनिधावपि अनाथेव उद्ध्वंसितेव प्रणष्टसकलपूर्वशोभा, भूतैरिवाधिष्ठिता, कृतान्तदूतैरिव कटाक्षिता, सर्वतो विजृम्भिताविच्छिन्नमलिनच्छाया, चिन्ताविसंस्थुलगृहस्थगीर्वाणपरिहृतसर्वनिजनिजव्यापारा, रणरणकगृहीतगृहदेवतावनदेवतासदुःखदृश्यमानतत्क्षणम्लानकल्पपादपा, स्थानस्थानपूज्यमानस्विन्नसिद्धायतनदेवताप्रतिमा, प्रतिमन्दिरमाकर्ण्यमा-

---

**अस्तीति** । रणरणकः उत्कण्ठा, चित्तावेग इति यावत् ।

नश्रवणदुष्टहाकष्टशब्दा दृष्टा । मन्दिरमपि तदीयमप्रवृत्तोत्सवम्, धृतानुचितवेषनिर्व्यापारनिःशेषकलत्रम्, अप्रमत्तविबुधयोधशतसंरक्ष्यमाणगोपुरप्राकारम्, उद्विग्नसकलपरिजनं दृष्टम् ॥

इदं चारिष्टमतिकष्टमप्रतिविधेयं विधिवशात्तत्रोपजातम्, तस्य तत्कलत्रस्य वा प्रधानस्य अचिरकालभाविनं विनाशमवश्यतया निवेदयति । न हि येषु केषुचिदनर्थोपनिपातेषु, कदाचिदपि दिव्यानामास्पदेषु संपद्यन्ते ईदृशाः पदार्थानां प्रकृतिविपर्ययाः, तत्संनिवासिनां च विबुधलोकानामन्तरत्यन्तशोकातङ्कशंसिनो हृदयायासाः । तेन च मया तत्र गत्वा द्रष्टव्योऽसौ कदाचिदप्यदृष्टदीर्घमद्विरहदुःखः सखा । सुखयितव्यः सर्वकालमभिलषितमद्दर्शनो निजदर्शनेन । शमयितव्या दिव्यलोकच्यवनसुलभा सर्वभावानां विनश्वरस्वभावतावेदनेन हृदयेऽस्य दाहकारिण्यरतिवेदना । देयो दिव्यशक्त्यनुरोधेन सुगतिसाधनेषु धर्मकार्येषु सविशेषमुपदेशः । ततस्तेन सह पूर्वानुभूतसुखदुःखवृत्तान्तकथाव्यतिकरेण नीत्वा विभावरीमेताम्, विभातकाले कथमपि प्रार्थितपुनर्दर्शनेन पुनरपि प्रतीपं निवर्तितव्यम् । **कर्तव्यं च किमपि कालोचितमकृतकालक्षेपेण ख्यातेः सुखस्य चामुष्मिकस्य साधकं कुशलानुष्ठानम्** । यतो ममापि निष्ठितप्रायमायुः । अल्पावशेषा त्रिदशलोकस्थितिः । उपस्थितो दीर्घकालप्ररूढगाढप्रणयैर्नाकिभिः साकमात्यन्तिको विरहः । क्रोडीकृतं मनुष्यलोकावतारस्मरणपीडया निबिडमन्तःकरणम् । ईदृशे च सर्वतः समुपस्थितातिदुर्वारव्यसनजाते उपजनितसंसारसुखवैमुख्ये विवेकिनाम् उदीरितपरोपकारबुद्धौ उदारचे-

---

**इदमिति** । अरिष्टं अशुभम् । निष्ठितप्रायं भूयसा गतम् ।

तसाम् अतिदारुणे दशापाके, कथंचिदुपजातसंगमस्य सुरपति-प्रशंसाश्रवणदिवसादारभ्य प्रतिदिवसमभिलषितदर्शनप्राप्तेराकारदर्शनेनैव प्रशमितसकलहृदयोद्वेगतमसो महात्मनो न च सर्वात्मना प्रियमकर्तुमन्तःकरणमुत्सहते मदीयम्; मन्दायते च त्रिभुवनातिशायि सत्त्वमलुब्धतां च तावकीं प्रागुपश्रुतां विचिन्त्य, प्रत्याख्यानलाघवमुत्प्रेक्षमाणम्। अतो न शक्नोमि सर्वथैवोपचारक्रियापराङ्मुखो भवितुम्, नापि यथाभिमतवस्तुप्रार्थनाविषयेणाभ्यर्थनेन कदर्थयितुम्। केवलमवलम्ब्य मध्यमं पन्थानमुपरचयामि तेऽञ्जलिम्। अनुगृहाणेमां मनःपरितोषाय मे, नृपचन्द्र चन्द्रातपाभिधानं प्रधानमखिलानामपि स्वर्गभूषणानामासत्तिमात्रेणापि कृतसकलदुरितापहारं हारम्। एष किल क्षीरोदेन परिणतामलकीफलस्थूलनिस्तलानि मुक्ताफलान्यादाय कौतुकेन स्वयं ग्रथितः; कृतश्च स्वयंवरोत्सवानन्तरमसुरारिमन्दिरमाश्रयन्त्याः श्रियो मन्युगद्गदकण्ठेन कण्ठकाण्डमण्डनम्। उपनीतश्च देव्यापि कमलया जन्मनि कुमारजयन्तस्य ज्येष्ठजायेति पुलोमदुहितुः। तयापि कृत्वातिदीर्घकालमात्मनो मण्डनम्, अर्पितः सखीप्रेमहृतहृदयया मत्प्रियायाः प्रियङ्गुसुन्दर्याः कण्ठदेशे। अद्य तु क्वापि धर्म्ये कर्मणि नियुज्य ताम्, आगच्छता मया विरहविनोदार्थमारोप्य कण्ठे, सुहृद्दर्शनोत्कण्ठितेनानीतः। तदेष संप्रति स्वभावधवलरुचिः कालच्छायाकबलितमरुच्येव मोक्तुकामो माम्, अप्राप्य कथमपि पुण्यपरिणत्या प्राज्ञया संयोजितं त्वां मुक्तामयवपुषम् अशेषतो मुक्तामयः, त्रासविरहितम् अपेतत्रासः, स्वच्छा-

---

निस्तलानि वर्तुलानि। कालच्छाया कृष्णा कान्तिः, यमच्छाया च।

शयम् अतिस्वच्छः, गुणवन्तम् अतिशयोज्ज्वलगुणः, प्राप्नोतु सदृशवस्तुसंयोगजां प्रीतिम् । अस्य हि परित्यक्तसुरलोकवासस्य दूरीभूतदुग्धसागरोदरस्थितेस्त्वद्वसतिरेव स्थानम् । न हि त्र्यम्बकजटाकलापमन्तरिक्षं वा विहाय, क्षीणोऽपि हरिणलक्ष्मा क्षितौ पदं बध्नाति । मयाप्यनन्ययोग्योपभोगां भव्यतामस्य भावयता, दिव्यदर्शनममोघमिति घोषणां जनस्य किंचिच्चरितार्थां चिकीर्षता क्षणमात्रपरिचितमात्मानमीषदनुस्मरणविषयतां नेतुभिलषता, प्रीतिप्रगुणितस्य चात्मनस्तरलतां तिरोधातुमक्षमेण अयमुपनीयते, न पुनरुपकाराय प्रीतये वा । सर्वस्वदानेनापि देहिनामुपकुर्वतः, परेण प्रार्थितां पृथिवीमपि तृणगणनया परित्यजतः, किं तद्वस्तु; यत्प्रदानेन प्रीतिरुपकारो वा भविष्यति भवतः । सर्वथा दत्तोऽयं मया । 'विपत्प्रतीकारासमर्थः क्षीणायुषोऽस्य भिषगिव कथं ऋक्थमाहरामि । अलंकारः क्षत्रियकुलस्य याचकद्विज इव कथं प्रतिग्रहमङ्गीकरोमि' इत्यनेकविकल्पविप्रलब्धमनसा त्वया मनस्विनां वरेण, त्रिदशनाथेऽपि भगवति कदाचिदकृतप्रणयभङ्गस्य मे न कार्यः प्रथमप्रार्थनाभङ्गः । ग्रहीतव्यो निर्विचारेण, यस्मादुपरोधभीरुत्वादगृह्यमाणोऽपि भवता दूरीभूत एवैष मे स्वर्गच्युतस्य । गृहीतस्तु कदाचिन्मनुष्यलोके लब्धजन्मनः पुनरानन्दयति मे दृष्टिम् । इष्टतमदर्शनं चैनम् अमरलोकाच्च्युता कालक्रमेण देव्यपि मे प्रियङ्गुसुन्दरी कदाचिदालोकयति । दर्शनाभ्यासजातपूर्वजातिस्मृतिश्च स्मरति रतिकराण्यसक्तं मया सहोपभुक्तानि स्वर्गवासक्रीडासुखानि ।

---

मुक्तामयः मौक्तिकनिर्मितः, रोगहीनश्च । त्रासः भयम्, मौक्तिकदोषश्च । गुणः सौशील्यादिः, रज्जुश्च । ऋक्थं धनम् । असक्तं अविलम्बेन ।

विरहदुःखदत्तोद्वेगा च प्रवर्तते यथाशक्ति कुशलावाप्तिसाधके कर्मणि । एवं च तस्या अप्युपकृतं भवति । **संभवन्ति च भवार्णवे विविधकर्मवशवर्तिनां जन्तूनामनेकशो जन्मान्तरजातसंबन्धैर्बन्धुभिः सुहृद्भिरर्थैश्च नानाविधैः सार्धमबाधिताः पुनस्ते संबन्धाः । स्मरणानि चात्यन्तविस्मयकराणि पूर्वजातेः ।** अतो नायमालापो मोहप्रलाप इति मे समर्थनीयः । कदर्थनीयश्च न पुनरहं प्रार्थनाभङ्गदैन्यसंपादनेन" इत्युदीर्य कण्ठादवतार्य किंचिदवनतेक्षणो दक्षिणकरेण हारमुपनिन्ये । नरेन्द्रोऽपि, तेन चर्मचक्षुषामगोचरेण तस्य साक्षान्निजदिव्यरूपाविष्करणेन, तेन स्मितोद्भेदपूर्वेण वक्षसि रचितकोमलकराञ्जलिना प्रथमाभिभाषणेन, तेन सुरपतिप्रशंसाप्रकाशनपुरःसरेण विस्तरवता स्ववृत्तान्तकथनेन, तेन च दूरं परिहृत्य दिव्यतावलेपं स्पृहणीयेन प्रतिग्राहणाय भूयो भूयः कृतेन प्रणयप्रार्थनेन दूरमावर्जितमनाः, प्रकृतिनिःस्पृहोऽपि परोपचारेष्वतिस्पृहयालुरिव सत्वरमुपसृतः प्रसार्य करयुगलमग्रतस्तं जग्राह ॥

देवोऽप्यसौ अलक्षितगतिस्तस्मिन्नेव क्षणे झगित्यदर्शनमगमत् । तिरोभूते च तस्मिन्, उपजातविस्मयो नरपतिर्निरीक्ष्य चक्षुषा निश्चलेन तं हारम्, उत्तरीयाञ्चलैकदेशे बबन्ध । प्रविश्य च शक्रावतारायतनमध्यम्, आराध्य भगवन्तमतिचिरमादिदेवम्, आगत्य निजसदनम्, उपपाद्य भक्त्यतिशयेन श्रियः सायंतनीं सपर्याम्, अभिमुखीभूय तन्मुखे निहितनिश्चललोचनो निषसाद । निजगाद च—'भगवति, त्वच्चरणारविन्दसेवानुभावोऽयम्, यदस्मादृशामपि मनुष्यमात्राणामशेषत्रिभुवनमाननीया वैमानिकाः

संनिधिमभिलषन्ति; योगिज्ञानगोचरं चात्मनो रूपमध्यक्षविषयीकुर्वन्ति; प्रकटितसंभ्रमाश्च दृष्टिदानसंभाषणादिना बहुमानेन महिमानमारोपयन्ति । एतच्च यद्यपि अनिमित्तबन्धुना परोपकारपराधीनमानसेन महात्मना तेन दिव्यपुरुषेण स्वाङ्गभूषणीकृतमाभरणमेकं दत्तम्, तथापि त्वदीयमेतत् । अतो न मे शरीरस्पर्शमर्हति । **दिव्या हि मूर्तयो भाजनं दिव्याभरणानाम्** । तेन तावक एव परिवारलोके भवतु कस्यचित्; अनुभवतु वा अदृष्टोदयान्मनुष्यलोकमागतमपि पुनस्त्रिदशलोकस्थितिसमुचितं शोभातिशयम्' इत्यभिधाय तं हाररत्नं देवतायाश्चरणयोः पुरस्तादमुञ्चत् ॥

अत्रान्तरे नितान्तभीषणो विशेषजनितस्फातिरास्फालिताशातटैः प्रतिशब्दकैः शब्दमयमिवादधानास्त्रिभुवनं हासध्वनिरुदलसत् । उपश्रुत्य च तमश्रुतपूर्वमुर्वीपतिरुपजातविस्मयः पस्पर्श चेतसा कियन्तमपि हासम्, न तु स्वल्पमात्रमपि संत्रासम् । अनुज्झितस्वभावावस्थितिश्च स्थित्वा मुहूर्तमुद्भूतकौतुकस्तदनुसारेण संचारयामास तिर्यग्वलिततारकं चक्षुः ॥

दक्षिणेतरविभागे संनिहितमेव देवताया झगिति दत्तदर्शनम्, निदर्शनमिवाशेषत्रिभुवनभीषणानाम्, अतिकृशप्रांशुविकरालकर्कशकायम्, अनतिपुराणशुक्तिकाश्रेणिसितभासा स्थूलपृथुलया नखपरम्परया प्रकाशितनिजप्रभातिमिरातिरोहितचरणयुगलाङ्गुलिविभागम्, अक्षुद्रसरलसिरादण्डनिचितेन निश्चेतुमुच्छ्रायमूर्ध्वलोकस्य संगृहीतानेकमानरज्जुनेवोपलक्ष्यमाणेन गगनसीमोल्लङ्घिना जङ्घाद्वितयेन

---

**अत्रेति** । स्फातिः वृद्धिः ।

**दक्षिणेति** । उच्छ्रायः औन्नत्यम् ।

निरन्तरारूढविततव्रततिजालयमलतालशिखरनिषण्णमिव दृश्यमानम्, उल्बणास्थिग्रन्थिना जानुयुगलेन क्षीणमांसेन च निकाममूरुकाण्डद्वयेन विश्राणितपरस्परगुणप्रकर्षम्, असृक्प्रवाहपाटलया वैतरणीसरित्सलिलवेणिकयेव पृथुलदीर्घया रोमलतया सीमन्तितकरालकुक्षिकुहरपातालम्, अचिरखण्डितं मन्त्रसाधकमुण्डं गलावलम्बितं बिभ्राणम्, कबलितपिशितचर्वणायासचञ्चलेन कूर्चकचकलापेन कबलितं प्रलम्बपृथुलं चिबुकमुद्वहन्तम्, शिखिकणारुणया तिर्यग्विसर्पिण्या फणामणिकिरणमालया जटालीकृतसरलभोगनालाभ्यामलघुना निष्पतन्तमोघेन घोणापुटश्वासमुभयतः पातुमवतीर्णाभ्यां कर्णाभरणविषधराभ्यां द्विधाप्यधःकृतोष्ठपृष्ठलोमलेखम्, मुहुरुदञ्चता मुहुर्न्यञ्चता मुहुः प्राञ्चता तिर्यगजगरदेहदीर्घपृथुलेन जिह्वालताग्रेण ललाटचिबुकसृक्प्रान्तगतमार्द्रार्द्रं मेदःकर्दममास्वादयन्तम्, अन्तर्ज्वलितपिङ्गलोग्रतारकेण करालपरिमण्डलाकृतिना नयनयुगलेन यमुनाप्रवाहमिव निदाघदिनकरप्रतिबिम्बगर्भोदरेणावर्तद्वयेनातिभीषणम्, आभोगिना ललाटस्थलेन सद्यःस्थापितमसृक्पङ्कपञ्चाङ्गुलं दधानम्, ऊर्ध्वस्थितेन स्थिरतडित्तन्तुसंतानस्थानकविडम्बिना कपिशभासुरेण केशभारेण भर्त्सयन्तम् उपरि जाज्वल्यमानज्वालाखण्डमुत्पातधूमदण्डम्, आयतनभित्तिसङ्गिना बलिप्रदीपप्रभाप्रकाशितेन केशनखदशनवर्जमात्मनो निर्विशेषच्छायेन प्रतिच्छायापुरुषेण पार्श्वचारिणा सानुचरमिव दृश्यमानम्,

---

व्रततिः लता । यमलतालौ तालवृक्षद्वयम् । तादृशजङ्घाद्वयविशिष्ट एतादृशतालयुगलस्थित इव भातीति तात्पर्यम् । सृक्क ओष्ठप्रान्तः । ओष्ठपृष्ठलोमलेखा श्मश्रुराजिः । पञ्चाङ्गुलं अङ्गुलिपञ्चकनिवेशः, यः प्रतिहस्तकपदेन व्यपदिश्यते । 'तत्पुरुषस्याङ्गुलेः—' इति समासान्तः । धूमदण्डः धूमकेतुः ।

# देशवृत्तान्ताः ।

सिंहमासस्य प्रथमे भानुवासरे, 'विचित्रशतावधानिभिर्विद्वन्मणिभिर्महाभागवताचार्यैः' मतत्रयगीतोपन्यासकुशलैः श्रीमद्भिः श्रीलक्ष्मणाचार्यपण्डितोत्तसैर्विरचितस्य गीताप्रसङ्गस्य समाप्तिरस्मिन् त्रिशिरःपुरे संवृत्ता । श्रीमदाचार्याश्च प्रातः सप्तमघण्टावादनसमयमारभ्य सार्धदशमघण्टापर्यन्तम्, मध्याह्ने च तृतीयघण्टाप्रभृति यावदष्टमघण्टां सार्धाभिरष्टाभिर्घण्टाभिरादित आरभ्य आ चावसानादष्टादशाप्यध्यायान्गीताया अर्थतः समुपन्यास्थन् । किं वा वदामः श्रीमदाचार्याणामतिमानुषमुपन्यासचातुर्यमधिकृत्य । अहो निरर्गलो वाक्प्रसरः । रमणीया बोधनवैखरी । विस्मयकरी तत्तद्विषयाणामुपस्थितिः । प्रशस्तः प्रतिभाविशेषः । अन्यादृशी तत्तन्मतमर्मज्ञता । अतिमनोहरः पद्यानामवतारिकाप्रकाशः । लोकोत्तरास्तत्र तत्र लौकिका दृष्टान्ताः । प्रत्यध्यायं प्रतिपद्यं संख्यानिर्देशपूर्वकमवतारिकानुरोधेन मतत्रयाभिप्रायं विवृत्य, संकुचितेन समयेन श्रीमतीं भगवद्गीतां विषयतो विशदं निरूपयितुं न हि कश्चिदपि मानुष्यकमात्रधर्मा प्रभविष्यति । सहस्रद्वितयादप्यधिकाः खलु सभ्याः संगताः । पण्डिताश्च प्राड्विवाकाश्च न्यायवादिनश्च वणिजश्च स्त्रियश्चेति सर्वेऽपि जना आनन्दपरिपूर्णाश्च विस्मयस्तिमिताश्च संतोषाश्रुभरिताश्च प्रशंसाकारिणश्च भक्तिभरनम्राश्च सर्वात्मना श्रीमदाचार्यान् दिव्यांशावतीर्णानिव आपण्डितमा च पामरादमन्यन्त । को हि संशयः । 'यद्यद्विभूतिमत्सत्त्वम्' इति हि भगवानेव गायति । गीताप्रसङ्गावसाने च श्रीमतामाचार्याणां कृपालब्धकतिपयाक्षरेण सहकारिसहृदयापत्राधिपेन कृष्णमाचार्येण श्रीमदाचार्यप्रभावविषयकं पद्यमेकमनुवाच्य द्रामिड्या अर्थापितम् । ततश्च सर्वेऽपि सभास्ताराः स्वस्वानुगुणं श्रीमदाचार्यान् पट्टाम्बरादिभिः संभाव्य महता समारोहेण गृहं प्रावेशयन् ।

बहुभिः संस्कृतभाषाप्रणयिभिस्तास्ताः पत्रिकाः पुस्तकानि च प्रेषितानि कृतज्ञतां वहामस्तेषु । क्रेमात्समालोच्येत ।

सेप्टम्बर्मासस्य त्रिंशे दिने केरलदेशे संस्कृतपाठशालोपाध्यायानां समाजः, विज्ञानचिन्तामणिपत्राधिपस्य श्रीमतः पुन्नश्शेरिनम्पि, नीलकण्ठमहाशयस्य गीर्वाणवाणीपाठशालायामैषमो भविष्यति । आगतांश्च महाभागान् पत्राधिपः स्वयं सत्करिष्यतीति जानीमः ।

# वासवदत्ता ॥

## अभिनवभट्टबाणेन श्रीमता कृष्णमाचार्येण रचितया विमर्शिनी-समाख्यया सुविस्तृतया व्याख्यया नानाविषयविमर्शभासुरया महत्या कयाचन भूमिकया च समुपेता ॥

अस्यां च व्याख्यायां सर्वेषामपि मूलपदानां सरलानि प्रतिपदानि विलिखितानि । आशयश्च वाक्यानामनिस्फुटमाविष्कृतः । प्रमाणतया सर्वत्र कोशाः, तत्तत्पदव्युत्पत्तौ पाणिनीयसूत्राणि च प्रदर्शितानि । अलंकारविवेकः सूक्ष्मेक्षिकया कृतः । रसभावादिनिरूपणं च रमणीयमाचरितम् । तत्तच्छास्त्रसांकेतिकपदविवरणप्रकरणेषु च यावदावश्यकं तत्तच्छास्त्रमर्यादापि विस्पष्टतया विवृता । शिवरामादिव्याख्यानानामस्वारस्यं च तत्र तत्र प्रकटितम्, प्रकाशितश्च तत्र नव्यो विवरणप्रकारः । मूलपाठोऽपि बहूनादर्शानवलोक्य स्वारसिक एव योजितः । पाठान्तराण्यपि व्याख्यायां प्रकटितानि । ग्रन्थसंख्या च व्याख्यायाः प्रायेण सप्तसहस्रात्मिका स्यात् । भूमिकायां च प्रथमतो गद्यकाव्यानां वैरल्ये हेतवः प्रदर्शिताः । ततः कथासंग्रहो विलिखितः । पश्चात् आदित आरभ्य साहित्यकलाया गमनिका सांप्रतिकी स्थितिश्च निरूपिता । तदनन्तरं कविः श्लेषलोभेन कुत्र कुत्र अनौचित्यमपि न गणयतीति विमर्शः कृतः । परस्तात् श्लेषलुब्धस्यास्य कवेः कानि पदानि कानि वा वाक्यानि पुनः पुनरवशमायान्ति बहिरिति मीमांसितम् । वृत्तिरीतिपाकादिकं च समनन्तरं समालोचितम् । अयं च कविः, रामायणभारतयोः कतरस्मिन् आत्मनोऽधिकं परिचयं सूचयतीति, परमेश्वरनारायणयोः कस्मिन्नधिकां भक्तिमभिदर्शयतीति च विचारितम् । पश्चाच्च महता प्रबन्धेन बहुभिः प्रमाणैः कवेरस्य जीवनकालः सिद्धान्तितः । तदवसरे च तद्विषये एतावता तत्तद्विमर्शककृतानां निर्णयानां साधुत्वमसाधुत्वं च बलवतीभिर्युक्तिभिर्विचारितम् । समनन्तरं च अस्य ग्रन्थस्य 'वासवदत्ता' इति नामकरणं कियद्दूरं संगतमिति विचारितम् । अन्ते च सविस्तरमयं प्रबन्धः कथाभागवर्णनादिषु गुणतो दोषतश्च सूक्ष्मेक्षणेन सरसैर्वाक्यजालैः साधु परीक्षितः । भूमिकायाश्च पुटाः षट्षष्टिः (६६) समीचीनसुदृढवस्त्रेण कृते मुखबन्धे सन्ति सौवर्णान्यक्षराणि । मूल्यं तु रूप्यद्वयमात्रम् । रू. २ । प्रापणभृतिः पृथक् ।

अध्यक्षः,

श्रीवाणीविलासपुस्तकशालायाः,

श्रीरङ्गे ।

REGISTERED No. M. 103.

Vol. XIII. No. 7.

# The Sanskrit Journal

— OR —

# ॥ सहृदया ॥

संपादकः
र. कृष्णमाचार्यः, एम्. ए.

सहकारिसंपादकः
रा. च. वि. कृष्णमाचार्यः.

सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥



विषयाः ।



PUBLISHED
AT
PUDUKOTTA.

SRI VANI VILAS PRESS.
SRIRANGAM
1908.

## सहृदया नियमाः ।

१. सहृदयाया द्वात्रिंशत्पृष्ठात्मिका एकैका संचिका प्रतिमासं प्रचार्येत । अस्यां च ललितपदघटिता अवश्यज्ञेयविषयभासुरा गद्यमयाः प्रबन्धा एव प्रायेण भवेयुः ।

२. उपन्यासलेखकैरपि महाशयैः सुस्पष्टमेकस्मिन्पत्रपृष्ठे मुद्रितग्रन्थरीत्या संधिविरामपुरःसरं विलिख्य प्रेषिता एव प्रबन्धाः सहृदयायामवकाशं लभेरन् ।

३. तत्तदुपन्यासप्रकाशनाप्रकाशनयोः, तत्र तत्र परिवर्तने वा पत्राधिपेच्छैव निष्पक्षपाता नियामिका ।

४. प्रेषिताः प्रबन्धा अप्रकाशिता दत्ते शुल्के परावर्त्येरन् । उत्तराकाङ्क्षिभिश्च शुल्कपत्रमवश्यं प्रेर्यम् ।

५. अधिकभागयोजनेऽपि वार्षिकं मूल्यं परं यथापुरं रूप्यत्रयमेव । प्रापणव्ययो न पृथक् । एकस्याः संचिकायास्तु आणकचतुष्टयं मूल्यम् । इङ्लण्डादिषु तु अस्या मूल्यं नव षिल्लिङ्गाः ।

६. उपन्यासाः, पुस्तकानि च "सहकारिसंपादकः, सहृदया, कोत्तवाल्चावडि, तृचिनाप्पल्लि" इत्यत्र प्रेर्याणि । एतदन्यसमस्तकार्यार्थमपि लेखाः "मानेजर्. सहृदया आपीस्. पुदुक्कोट्टै" इत्यत्र प्रेषणीयाः ।

## विज्ञापनप्रकाशन नियमाः ।

१. संपूर्णस्य एकस्य पृष्ठस्य वार्षिकं प्रकटनमूल्यं चतुर्विंशती रूपिकाः । रू. २४.

२. प्रतिमासमेकस्याः पङ्क्तेः आणकद्वयम् । अणा. २.

३. चिरकालभाविनो विज्ञापनप्रकाशनस्य तु सौकर्यं क्रियेत, तच्च कार्यालयाद्विज्ञेयम् ।

# NOTICE.

## *To our Subscribers.*

IT is not unknown to you that journals could not be conducted without the cordial support of the subscribers especially Sanskrit periodicals. It is further known to you that our earnestness is our only capital and that we do not want to make any profit out of this. So we earnestly request such of our subscribers as have not yet paid their subscriptions to remit the same at an early date or to kindly accept the 8th issue which we shall send by Value Payable Post.

## विज्ञप्तिः ।

---

महाशयाः, विदितमेव श्रीमताम्—यत्पत्रिकायाः प्रचारणं नाम दुःशकं ग्राहकानुग्रहम्, विशेषतश्च गैर्वाणीमय्या इति; अभिलाषमात्रमूलधना वयमत्र निरपेक्षं प्रवृत्ता इति च । तत्प्रार्थ्यते मूल्यप्रेषणम्; यैर्न प्रेषितं मूल्यम् । नो चेत्, वी-पी-पी. द्वारा प्रहेष्यमाणा अष्टमी संचिका कृपया मूल्यदानेन परिगृह्यताम् ।

त्रिच्चिनाप्पल्लि }
१५—१२—०८ }

भवदीयः
रा. च. वि. कृष्णमाचार्यः ।
सहकारिसंपादकः ।

॥ श्रीः ॥

# ॥ सहृदया ॥



कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि ॥

संपु. १.] कीलकवर्ष आश्विनमासः । [संचि. ७.

## सुभाषितानि ।

कलापीनः कश्चित्सरसघनशब्दोत्सुकमना
वितत्य स्वं पक्षं यदि नटनशिल्पं घटयति ।
तदा दर्पाध्मातः कटुरटनधाटीपटुतरः
प्रसार्य स्वं पुच्छं किमिति कृकवाकुश्चलयति ॥

मयूराणां बर्हान्गतिविलसितीः श्वेतगरुतां
पिकानामालापानपि सततमाशीलयति यः ।
कथं रोचेतास्मै कथय तव पक्षस्य लघिमा
पदस्य स्खालित्यं ननु करट शब्दस्य कटुता ॥

न पक्षे सौन्दर्यं न सरसविलासः पदगतौ
न कण्ठे माधुर्यं न पुनरनुवादेऽपि पटिमा ।
कथं सत्यप्येवं कथय करट त्वां वयमिमे
मयूरं हंसं वा पिकमुत शुकं वा मनुमहे ॥

सहकारिसंपादकस्य ।

# भारतखड्गः ।

| | | |
|---|---|---|
| जनार्दनारा | धनात्मनि मखे | जनाधिपेना- |
| मुना विरचिते | धनादिविश्रा | णनाय भीमा- |
| र्जुनादिवाङ्निय | मनान्वितेऽनघ | घनाशनाच्छा- |
| दनाप्तिसमयो | न्मनायितद्विज | सनातनोक्ति- |
| स्वनाधिकविनो | दनाभिरामे | दिनाधिपानल |
| सनाभिहोत्रा | द्यनाकुलतमा | ननाभिपतद्- |
| ङ्निनादजुषि भो | जनादितृप्ता | मनाक्कृतहसा |
| ननाद निष्कि | ञ्चनावलिरिहा | धुनापि नुत्यै |
| स राजसूयहव. | स्तुवन्त्युदारं हि | भूतले बहवः ॥ ४३ ॥ |

| | | |
|---|---|---|
| भ्रमाद्यबोध | प्रमादरहित | प्रमातृहृदयं- |
| गमानघक्रतु | समाप्तिसमये | क्षमाजगत्यभि- |
| समापतद्रवि | समारुतानल | समाभसुमनः- |
| समाजगसुधी | समाराधने | समाहिततमौ |
| यमावुभौ तौ | क्रमाद्विचिन्त्या | भिमानडम्भा- |
| क्षमादिरहितं | हिमांशुमण्डल | समानवदनं |
| रमाधिनाथं | समासेदतु | स्तमाराद्धुमि- |
| त्यमानपरुषै | र्विमानयन्तं | समाधवस्तं |
| जघान शिशुपालं | यस्य विनम्रावनाय | हि कृपालम् ॥ ४४ ॥ |

| | | |
|---|---|---|
| दयालुधर्मज | सुयागमिह दि | ग्जयादरोत्थित- |

सयादवार्जुन भिया समीपो पयातनरपति-
चयार्पितधन श्रियाभ्यधिकम प्रयासविहित-
प्रयाजभेदा नुयाजमुखसमु दयाभ्युदितवि-
स्मयान्वितबुध प्रियाक्षरोक्तयति शयाढ्यमतुलं
धिया विमृश्य ह्रियार्दितः सन् कियानहमिति
स्वयावमतया प्रयामि न सुखं त्वया विधेया
क्रिया ममाधि व्ययाय तेषां क्षयाय चेति स
सुयोऽधनो भूपः शकुनिं मातुल मवोचदुरुतापः ॥ ४५ ॥

सुयोधन विनि श्चयोऽयमसुहृ त्क्षयोपयुक्तो
मयोच्यते त्व त्प्रियोऽक्षशास्त्रे धियोच्छ्रितोऽहं
त्वयोपनेयाः स्मयोद्धतास्तेऽ रयोऽत्र योज्या
जयो भवेदिति सयोगमुदिते क्रियोदये विधि-
नियोगतस्ता नयोजयदसौ हयोष्ट्रकुञ्जर-
सुयोधकोश श्रियो हृताः पण तयोपनिहिताः
स्त्रियोपरि तदी ययोपहितया नयोपान्तमि-
त्ययोग्यवचना न्वयोऽवमतिभर मयोऽधिगत इ-
त्यभूत्सुयोधनतः क्लेशः कुन्तीभुवां तदोपनतः ॥ ४६ ॥

अनार्यदुर्यो धनाभिहित दु र्जनाग्र्य दुःशा-
सनाहृताच्छा दनां द्रुपदजां मनागपि सद-
स्यनाक्षिपन्त्यां घनार्तियोगा दनाथपाला-
ब्जनाभ यदुन न्दनाद्य मामव जनार्दनेति
स्वनामसंकी र्तनानि सद्य स्तनावमतितोऽ-

वनार्थमुच्चैः स्वनाढ्यमच्छ द्मना विदधतीं
स नागशयनो विना क्षणविल म्बनामवितुमु-
न्मना वसनव र्धनाय समभव दनारतमसौ
पुनः पटं कर्षन् भ्रन्त्वा न्यपत च्छ्रमाम्बु बहु वर्षन् ॥

सनागरसद स्यनालपन्त्यां विना विशङ्कां
घनावमाना दिनात्र भीमा र्जुनावथ तद-
ङ्गना च सहपरि जनाय दुर्यो धनाय दुःशा-
सनाय च क्रो धना भवन्तो विनाशसंवि-
त्सनाथवचना न्यनाहतान्यदु रनागतज्ञा-
मनागथ सभा ननाद भीतः स नायको दु-
र्मनायितस्तान् निनाय दत्त्वा धनादि पुनरय-
मनाकुलोऽभू दनार्जवाच्छकु निना सममर्मी
विचिन्त्य कुधिया तान् पुनरानिन्युः पथोऽ र्धमुपयातान् ॥ ४८ ॥

अनेनसि यशो धने पृथाभुवि घनेन विधिनिय-
मनेन भूयोऽ प्यनेकवर्षान् वने स्थितिं नि-
र्जने पणयता शुनेव परुषं विनेदुषा सम-
मनेन तस्मिन् दिनेशतेज स्यनेवंविनो-
दनेऽपि दुर्यो धनेन दीव्यति शनेरिव प्रय-
तनेन कृतपी डनेन बत दे वनेन जातं
स नैषदपि प त्तने न्यवात्सीत् विनेप्सितार्था-
वने धियं का नने चचारा मुनेडगसुखं
तदा समासादि अपथजुषो गलति धननिवासादि ॥ ४९ ॥

# आरोग्यप्रकाशिका ॥

समस्तैरप्यूष्मणः प्रमाणैः (Small Degrees) अम्भसः किल बाष्पीभावो निरन्तरमास्ते नियतः । विद्यते चापां नितरामूष्मसमाकर्षणशक्तिः । अपि तु न हि क्षिप्रममुं स्वनिष्ठमूष्माणं द्रव्यान्तरेषु तथा प्रभवत्यारोपयितुमिदमम्भः । अस्य हि गुरुता च वायोरपि, सप्तत्यधिकया सप्तशत्या भागानां (770) भवत्यधिका । न क्वचिदपि सलिलमेकान्ततः सुपरिशुद्धमिह किल धरण्यां कथंचिदप्युपलभ्येत । प्रावृषि चान्तिमेषु दिवसेषु आहृतमान्तरिक्षमुदकमेवाशेषेष्वपि सलिलेषु भवति संशुद्धम् । सुश्रुतश्चाह— 'तत्र गाङ्गमाश्वयुजे मासि प्रायशो वर्षति' इति । गाङ्गं नाम शुद्धमान्तरिक्षमुदकम् । किंत्वस्मिन्नप्यम्बुनि शरावशतकपरिमिते प्रायः सार्धशरावद्वयोन्मिताः केचिद्वायवीयाः पदार्थाः (Gases) सन्ति संयुक्ता इति वस्तुतत्त्वविदो वदन्ति । अत एव खलु 'प्रायशः' इति तत्राप्यब्रवीत् सुश्रुतः । गुणांस्तावद्वारिणो वार्षिकस्य विस्तरतश्चोत्तरतः प्रतिपादयिष्यामः ।

निखिलद्रवद्रव्यान्तरापेक्षया पाथस्येव बहवः पदार्थाः ( मूर्ताः द्रवाः वायवीया वा ) प्रायः परं प्रविलीयन्ते । ( Water is a best Solvent ) उष्णोदकस्य तु भवति शक्तिरियमितोऽपि नितरामधिका । यावदुपजायते चौष्ण्यस्याधिक्यम्, अस्य शक्तिरप्येषा तावत्क्रमशः परिवर्धते । किंतु वैपरीत्यमपि विधेरस्य क्वचिद्विलोक्यते । यथा— लवणं सामुद्रं नाम निर्विशेषमेवाप्सु विलीयेत उष्णासु नितरामनुष्णासु वा । उष्णादपि शिशिर एव उदके सुधा किल ( Lime) सम्यग्वि-

लीयते। कस्मिंश्चित्क्षारे सति विलीयमाने (salt) शैत्यमेवाधिकमप्सु सामान्यतः समुद्भवति। विशेषतस्तु सलिलस्य च कस्यचित्क्षारस्य च भौतिकरीत्या (chemically) संयोगतः किल प्रादुर्भवत्यौष्ण्यमेवातितराम्। पूर्वोक्तौ पदार्थौ चेह दृष्टान्तीभवतः। यथा—सामुद्रलवणसंयोगतः खलु सलिलस्य शैत्यम्, सुधायाः संयोगतश्चाविर्भवत्यौष्ण्यम्।

न किल मनुजाः सर्वेऽपि नावधारयन्ति यथाकथञ्चिन्महिमानमुदकस्य। विदेशमुपगतानां किल जनानां किंचित्समुपजाते च कस्मिंश्चिदामये, तद्देशीयानामपामसात्म्यतया समभूदारोग्यस्य विकृतिरिति खलु बहूनभिदधतः पश्यामः। नैतावतैव अपरिचितदेशीयस्य पानीयस्य दुष्टत्वमितरस्य शुद्धत्वं च निर्धारयितुमिह पारयामः। भुवि चिरपरिचितायां निजभूमावप्यपामाविलानामतितरामुपयोगतः प्रजा नियतं प्राप्नुवन्ति विविधान्व्याधीन्। जनेषु शते सहस्रे वा भुवि कस्यचिदेव नितरां सात्म्यवशादुपयुक्तमपि किंचिदिव दुष्टमुदकं न खलु भवति विकाराय। न ह्यमुनैव हेतुना सात्म्यमत्या अभिदुष्टमुदकं पातुमुचितम्। को वा विवेकी विषमुष्टिबीजं विशेषतः परिचितमप्यनुस्यूतमभ्यवहारत्वेन स्वीकुर्यात्? यदि शास्त्रमनुसरामः, शारीरमप्यभिलषामः सुखम्, तर्हि सर्वथा विमलस्य वायोरिव वारिणश्च परिशुद्धस्यैवाहरणाय सर्वैरस्माभिः प्रयतितव्यम्।

किमात्मकमिदं शुद्धमुदकं नाम? अत्र च के नाम दोषाः? का वास्य चायतयः (Soures) इत्येतान्यधस्तादिह विस्तरिष्यामः। आदितस्तावदुदकस्य आयतीरुदीरयित्वा, तदनु तस्य शुद्धस्य चाशुद्धस्य च स्वरूपमुदाहरिष्यामः। तत्र वारि वार्षिकमेव नियमेन नादे-

यादीनां निखिलानामपि सलिलानां निदानभूतमिति तदीय एव विषय आदाविव विलिख्यते ।

## वृष्टिः ।

वृष्ट्यैव भूयिष्ठमुदकं भुव्यस्याभिरुपलभ्यते । सर्वाः सरितः सागरमवगाह्य कुतस्तं न क्रमशः परिवर्धयन्तीति काचिदिहास्माकं भवति जिज्ञासा । अत्रेदं वक्तव्यम्— न ह्यपां निधेरिमाः सरितामापो भवन्ति नवीनाः । प्रागर्णवादम्बुदानां समुत्पत्तये यानि विनष्टान्यम्भांसि, पश्चात्तान्येव नैकशः परिणतानि सरित्त्वेन सागरमभियान्ति । स्वोत्पत्तिस्थानमेव यतो निम्नगाः समवगाहन्ते, तत एव वारांनिधिरपि पूर्वतो न ह्यमूभिरुपचीयते । कथमेतदित्याकाङ्क्षायां विस्तरतः किंचिदभिधीयते ।

यथा— सामुद्रमुदकं नाम निरन्तरमितो बाष्पीभूय नभस्युपरिष्टादुद्गच्छति । विशेषतश्चार्णवस्याम्भसस्तपनकिरणतापितत्वात्, तपर्तौ बाष्पीभावोऽयं नितरामभिवर्धते । यावानूष्मणः समुद्भवत्युपचयः, सलिलस्य बाष्पीभावश्च तावानतिरिच्यते । भूमिसमीपवर्तिनो वायोरपि लघिष्ठत्वात्, जलबाष्पस्तावत्स्वयमूर्ध्वमुद्गच्छति । यतः समीपत एव भुवस्तिग्मभानोर्भानवः (प्रतिफलनाधिक्यात्) तपन्त्यतितराम्; यतश्चोपर्यपचीयते क्रमश एषामियं तपनशक्तिः; अतः सलिलानि किल बाष्पीभूतान्यूर्ध्वमितो विगाह्य विहायसि क्रमात्परिजहति पश्चात्स्वनिष्ठमूष्माणम् । अतिसूक्ष्मतमत्वाच्चक्षुषोरनयोरगोचरा एवमूर्ध्वमितः समुद्गच्छन्ति ये पयसां बाष्पपरमाणवः; त एव तदनु क्रमेणाभिप्रपद्य शैत्यमत्यन्तम्, अधिगत्य च परिणाममम्बुदत्वेन गोचरीभवन्ति नः पश्चाद्दृशोः । इतोऽपि शैत्यस्य समुत्पन्ने चाधिक्ये

सलिलानां हिमानां वा वर्षः सपदि समुपजायते । शैत्यस्य परां काष्ठामधिगता घना एव घनीभूय भूयसा घनकफाः (करकाः) हिमघनाश्च संपद्यन्ते । भूमावभिवृष्टाभ्यश्चाब्भ्यो भूयः कश्चिदंशः सपदि बाष्पीभूयोर्ध्वमुद्गच्छति । अन्ये च केचिदंशाः सरांसि सरितश्चावगाहन्ते । भागाश्च केचिदवशिष्टा भूतलस्य द्वारेष्वन्तः प्रविश्याधःस्थलेषु कठिनेषु क्वचिदेकीभूयावतिष्ठन्ते । अपामंशास्त एव ‘विदारकाः’ (springs) इत्यभिधीयन्ते । त एव चाभिपूरयन्ति कूपादीन् । अतिशीतलेषु हिमवतः कटकादिषु किलाभिवृष्टान्यम्भांसि हिमानि वा नितरां घनीभूय सर्वत्र हिमघनात्मना (snow) गण्डशैलवत्संतिष्ठन्ते । ते च हिमघनाः समागते ग्रीष्मे द्रवीभूय नदीरूपेण प्रवहन्ति । प्रावृषि किल नदनदीतटाककूपादयः सर्वेऽपि प्रायः सलिलेन संपूर्णा भवेयुः । ग्रीष्मे च मनुजमृगपक्ष्यादिभिरखिलैरप्युपयुज्यमानत्वात्, भास्करकरसंतापेन च नितरां बाष्पायमाणत्वात्; पादपादिसस्यजातीनां मूलैरनवरतमाचूष्यमाणत्वात, अन्येषां च तत्र तत्र भुवि अवसेचनादीनां विविधानां कर्मणामुपयोगाय आह्रियमाणत्वात्, अतितरामापः सर्वत्रापचीयन्ते; निरवशेषं वा शुष्कीभवन्ति ।

एवमब्धेरापः किलानवरतं बाष्पीभवन्ति । उपरि च ताः मेघात्मतामधिगच्छन्ति । ततश्च ता वृष्टिरूपेण धरातलमभिप्रपद्यन्ते । अनन्तरं च नदीरूपेण अपांपतिमभिवहन्ति । पुनस्ततोऽपि यथापुरं बाष्पादीन्यवस्थान्तराणि च नन्वनुव्रजन्ति । इत्थं चैवमपां चक्रवत्परिवृत्तिर्जगति भवतीयं सार्वकालिकी ।

(क्रमशः)

यम्. पण्डितदुरैस्वाम्यय्यङ्गार्यः ।

॥ श्रीः ॥

# ॥ वररुचिः ॥

कोऽसौ महापुरुषः ? कस्मिन्देशे समुत्पन्नः ? कुत्र वा अस्य संभूतिः ? कतमद्वा कुलमनुगृहीतमस्य जन्मना ? कीदृशी वा तस्य प्रवृत्तिः ? कदा वायं मर्त्यलोकमिममलंचकार ? कस्मिन्वा गुरुकुलेऽनेन वाग्देवीप्रसादोऽलाभि ? कथमस्य शब्दशास्त्रे निरतिशयं प्राविण्यमुदपादि ? केन वा प्रभावेणास्य पाणिनीयसूत्रोपस्करणशक्तिः समजनि ? का वास्य सहधर्मचारिणी ? कानि मित्राणि ? कस्य राज्ञः सभा अनेनोद्द्योतिता ? कीदृशमस्य लौकिकव्यवहारविज्ञानम् ?—इत्यादिकमवगन्तुम्, मुनित्रयमनुदिनं नमस्कृत्य पाणिनीयमधीयानानां कौतूहलमस्त्येवेति मन्यामहे ।

वाक्यकारोऽयं वररुचिः, पुरा चराचरगुरोर्भवानीपतेरभिमतमेषु प्रमथगणेषूत्तमो नाम्ना पुष्पदन्तः शंभोः प्रसादभूमिरासीत् । कदाचिदसावम्बिकापतिमासेवितुमागतः 'न केनाप्यद्यान्तः प्रवेष्टव्यम्' इति नन्दिना वारितप्रवेशोऽपि कौतूहलेनाविष्टो योगवशादलक्षितमभ्यन्तरं प्रविष्टः, अचलराजकन्यकायै प्रणयमधुरं हरेण वर्ण्यमानमश्रुतपूर्वमत्यद्भुतं विद्याधराणां चरितमश्रौषीत् । आकर्ण्य बहिरागतः सविस्रम्भमात्मनो भार्यायै समग्रामपि तां कथामचकथत् । सापि विस्मयाविष्टा जयानाम्नी गिरिजायाः प्रतीहारी स्वामिन्याः पुरतो यथाश्रुतं विद्याधरचरितमगासीत् । श्रुत्वा तन्मृडानी सद्य एव पिना-

किनमभ्येत्य 'अपूर्वमिति त्वयोपवर्णितं चरितं जयापि जानाति' इति सक्रोधमगादीत्। उमापतिरपि प्रणिधानाद्भूतं विज्ञाय 'प्रिये, पुष्पदन्तेनालक्षितप्रविष्टेनैतच्छ्रुतम्। कथितं च भार्यायै' इति प्रत्यवादीत्। अनुक्षणमेव, 'मानुषतासुलभेन कौतूहलेनाकुलीक्रियमाणोऽयं पुष्पदन्तो मर्त्यलोकवासमेवार्हति' इति शप्तः शर्वाण्या, मध्यमं लोकमवशः समासाद्य, भारते वर्षे कौशाम्बीनगरे वसुदत्ताभिधया सहधर्मचारिण्या गार्हस्थ्यमनुतिष्ठतः सोमदत्ताख्यस्य कस्यचिद्द्विजवरस्य पुत्रः समजनि।

निरपराधमधुरवयसि वर्तमानस्य तस्य पिता लोकान्तरमयासीत्। जननी परं शोकविह्वलापि धैर्यमालम्ब्य कृच्छ्राद्बालकं संवर्धयन्ती, दारिद्र्येणाभिसंतप्तापि तनयाभ्युदयकाङ्क्षिणी यथाशक्ति बलिना आतिथ्येन च दैवतान्यतिथींश्चातार्प्सीत्। बालकोऽप्यविज्ञातदुःखवृत्तान्तः, नगरे तत्र तत्र प्रवर्तमानासु सभासु संगीतगोष्ठीषु च यद्यच्छृणोति तत्सर्वं जनन्यै यथाशक्ति वर्णयन्, तया च सहर्षं मूर्ध्न्युपाघ्रातः, कृष्णेतरपक्षशशलाञ्छन इवावर्धिष्ट। कदाचिद्व्याडीन्द्रदत्ताभिधौ द्वौ विप्रौ भुवं भ्रमन्तौ, एकरात्रिनिवासाय तद्गृहमागतौ, सकृदाकर्णनेनैव सर्वमपि हृदि धारयन्तमिमं बालकमवेक्ष्य विस्मितौ, परीक्षार्थं सकृत्पठितं प्रातिशाख्यमनुपदमेवानुवदन्तं तं सत्यमेव सकृच्छ्रुतधरोऽयमिति निश्चिन्वानौ, वसुदत्तां प्रणिपत्य अवोचताम्—"भोः साध्वि, नैष साधारणो बालकः। ईदृशमेवान्विष्यन्ताविह भ्रमावः। आवयोस्तु जन्मभूमिर्वेतसपुरी। शैशव एव मातापितृभ्यां वियुक्तौ, अनाथौ, पितृसंचितेन प्रभूतेन धनेनाविज्ञातदारिद्र्यौ, विद्याद्रविणकाङ्क्षिणौ, एकाग्रेण तपसा आराधितेन स्वामिकुमारेण

'नन्देन पालितं पाटलीपुत्रमेत्य वर्षनामकात् द्विजाद्विद्यामवाप्नुतम्' इति स्वप्ने समादिष्टौ, तामेव पुरीमगाहिष्वहि । अस्मिन्महानगरे कुत्र वा वर्षो दृश्येत इत्याकुलितमानसौ, 'अस्तीह वर्षाख्यो मूर्खः कश्चिद्विप्रकुलोत्पन्नः' इति कुतश्चित्संलपतो जनसमाजादुपलभ्य कुत्रचित्कोणे मूषकैः कृतविवरं भित्तिविश्लेषजर्जरं छदिषा हीनमवासयोग्यं जन्मक्षेत्रमिवापदां किंचिद्गृहमैक्षिष्वहि । तत्र ध्याननिरतं वर्षमालोक्य, समीपे स्थितां धूसरक्षामवपुषं विशीर्णमलिनाम्बरां तद्गुणरागागतां रूपिणीमिव दुर्गतिं पत्नीं प्रणम्य यथावदस्मदुदन्तमभाषिष्वहि। सा तु सादरमवादीत्— पुत्रकौ, आसीदस्मिन्नगरे शङ्करस्वामिनामा द्विजोत्तमः । तस्मादयं जज्ञे मूर्खो दरिद्रश्च पुत्रो वर्षनामकः । अस्यानुजो मतिमान्धनी नाम्ना उपवर्षः । एकदासौ देवरगृहिण्या दत्तं जुगुप्सितं सदक्षिणाकं दानं स्वीकृत्य मन्निकटमागतः, बहुधा मया विनिन्दितः, निर्वेदात्स्वामिकुमारं तपसा तोषयित्वा तत्प्रसादात्सर्वाश्च विद्याः समधिजगे । 'सकृच्छ्रुतधरं माणवकमुपलभ्य प्रथममेताः प्रकाशयेः' इति शक्तिधरेण समादिष्टस्तादृशमलभमानो दिवानिशं जपन् ध्यायंश्च तिष्ठति । अतस्तादृशः कश्चिदन्विष्यताम्' इति । ततो दौर्गत्यहानये तस्यै सुवर्णशतं दत्त्वा प्रस्थितौ, निखिलां भुवमटन्तौ, कुत्रापि तादृशं बालकमलभमानौ, निर्वेदस्य परां कोटिमापन्नौ, इह दिष्ट्या सकृच्छ्रुतधरमेतं बालकं निरैक्षावहि। विसर्जयैनं विद्यावाप्तये।" इति ।

एवं तयोर्वचनमाकर्ण्य सादरं सा जननी, 'तथैव क्रियताम् । जातमात्रेऽस्मिन् 'एष श्रुतधरो जातो विद्यां वर्षादवाप्स्यति । किंच व्याकरणं लोके प्रतिष्ठां प्रापयिष्यति । नाम्ना वररुचिश्चायं तत्तदस्मै

हि रोचते। यद्यद्दूरं भवेत्किंचित्' इत्युदभूत्काचिदशरीरा सरस्वती। तदनुरोधेन मन्ये प्राप्तौ युवाम्' इति वदन्ती, सहर्षं बालकं तयोर्हस्ते समार्पिपत्। व्याडिस्तमुपनीय, महान्तमुत्सवं कारयित्वा, वसुदत्तायै पर्याप्तं वसु दत्त्वा, उद्बाष्पायास्तस्या अनुज्ञामवाप्य, वररुचिना सहेन्द्रदत्तेन च पाटलीपुत्रमगात्। प्रापच्च वर्षोपाध्यायस्य निकेतनम्। 'अयमेव सकृच्छ्रुतधरः' इति विज्ञप्तो वर्षः, बालकं हर्षनिर्भराभ्यामुपोषिताभ्यामिव लोचनाभ्यां सस्पृहमापिबन् एह्येहीति गाढमालिङ्ग्य, अविलम्बेन शुचौ स्थण्डिले निषद्य, प्रसन्नगम्भीरया दिव्यवाण्या ओंकारोच्चारणपूर्वकं साङ्गान्वेदानध्यापयितुं प्रावर्तिष्ट। सकृच्छ्रवणेन वररुचिः, द्विःश्रुतेन व्याडिः, त्रिरुच्चारणेन इन्द्रदत्तश्च गुरुणोक्तमज्ञासिषुः। तच्चाश्रुतपूर्वमत्यद्भुतं वर्षस्य जर्जरगृहाद्रोदसी व्याप्नुवन्तं दिव्यं ध्वनिमाकर्ण्य विस्मयस्तिमितलोचनाः सोपवर्षाः पौरा वर्षोपाध्यायस्य माहात्म्यं शंसन्तः सर्वतो नगर्यां महोत्सवमकार्षुः। नरपतिरपि नन्दस्तं गिरिशसूनुवरप्रभावोपनतं विचित्रं वाणीविलासमालोक्य, वर्षस्य वेश्मनि वसुधारामववर्षत्।

एवं गच्छत्सु दिवसेषु, गुरुकुले वसन्वररुचिः क्रमेणातिक्रान्तशैशवो विद्याम्बुधेः पारममगत्।

अथ कदाचिदसौ व्याडीन्द्रदत्ताभ्यामिन्द्रोत्सवं द्रष्टुं बहिर्निर्गतः, क्वचित्सर्वाभरणभूषितां कामस्य वैजयन्तीमिव चरन्तीं रूपिणीं श्रियमिव पेशलाकारां सखीभिर्विस्रम्भालापेनात्मानं विनोदयन्तीमदृष्टपूर्वां कन्यामद्राक्षीत्। दृष्टमात्रैव सा तस्य कामशरनिर्भिन्नं हृदयमविक्षत्। शून्यहृदयो वररुचिस्तामेवानुध्यायन्, 'सखे, केयं दुर्विनीता कमनीयाकृतिः कन्यका? यैषा मदीयं मनश्चोरयित्वापसर्पति।'

इतीन्द्रदत्तमप्राक्षीत् । स तु विदितनगरवृत्तान्तः 'इयं पूर्णचन्द्रमुखी अस्मदुपाध्यायानुजस्योपवर्षस्यात्मजा । राजतीयमशेषरमणीकुलतिलकं स्मरभूपतिसौन्दर्यमन्दिरमिवेन्दिरापरा' इति तमबूबुधत् । ततः प्रभृति विस्मृतान्यकर्तव्यो मूक इव जड इव बधिर इव अन्ध इव विचेष्टमानः, तामेवानुस्मरन्, तन्मयमिव जीवलोकं पश्यन्, निखिलामपि रजनीमजागरीत् ।

अथ कथंचिदर्धयामावशेषितायां यामिन्यामुपलब्धनिद्रः स्वप्ने शुक्लाम्बरधरां दिव्यवनितामैक्षिष्ट । साप्येनमाश्वास्य 'पुत्रक, जानीहि मां ते शरीरान्तर्वासिनीं सरस्वतीम् । त्वन्मनोरथलक्ष्यभूतेयमुपकोशानाम्नी महिला तव पूर्वभार्या अस्मिन् जन्मनि त्वामेव कामयते; नापरं समीहते । तदलं चिन्तया' इति बोधयन्त्येवान्तरधात् । प्रबुद्धो वररुचिः सद्य एव दयितामन्दिरासन्नस्य बालचूतस्य मूलमशिश्रियत् ।

आभाषितः सादरमुपकोशायाः सखीभिः, आकारितश्चाभ्यन्तरे, जानन्नप्यात्मनो निमित्तेऽनुभूतानङ्गवेदनासहस्रां मानिनीम्, गुरुभिरदत्तायाः कुलकन्यकायाः स्वयंग्रहसाहसं नाभ्यनन्दीत् । अमंस्त च 'तादृशोपायान्मरणमेव वरं यशःकामस्य विवेकिनः' इति ।

अथ क्षामक्षामां शून्यहृदयां तनयामालोक्य विदितवृत्तान्ता उपकोशाया जननी भर्तारं तन्मुखेन वर्षं चाबूबुधत् । ताभ्यां च सप्रमोदं निश्चिते विवाहे, कौशाम्बीतो व्याडिना आनीताया मातुराज्ञामुपलभ्य, वररुचिः शुभे मुहूर्तेऽग्निसाक्षिकमुपकोशायाः पाणिमग्रहीत् । अवात्सीच्च सुखं मात्रा गृहिण्या च तत्रैव नगरे ।

गच्छता च कालेन वर्षोपाध्यायस्य यशसा सर्वा अपि दिशो

व्यानशिरे । अवृधच्च शिष्यसंपत्तिरनुदिवसम् । विद्याभ्यासार्थं वर्षस्य निकटमागतेषु माणवकेषु नितरां मन्दमतिः पाणिनिर्नाम कश्चन अभूत् । तं च गुरुशुश्रूषापरिक्लिष्टमन्यैर्मुहुरुपहासितं शिष्यं दृष्ट्वा दयार्द्रहृदया वर्षोपाध्यायस्य भार्या 'वत्स पाणिने, क्किमनेन वृथापरिश्रमेण । देवताप्रसादमनुपलभ्य, न शक्या विद्या साधयितुं त्वया । तद्गच्छ, प्रसादय भवानीपतिम्' इत्युपादिक्षत् ।

निर्विण्णश्च पाणिनिस्तद्वाक्यं बहुमन्यमानः, हिमालयं गत्वा, तीव्रेण तपसा तरुणेन्दुशेखरमुपासिष्ट । परितुष्टाच्च पुरारातेः सर्वविद्यामुखं नवं व्याकरणमलब्ध । पुनः पाटलीपुत्रमभ्येत्य, वररुचिमेव वादाय आह्वास्त । तयोश्च प्रवृत्ते वादे वासराः सप्त व्यतीयुः । अष्टमेऽहनि पाणिनिर्वररुचिना विजिग्ये । तदानीमम्बरतलस्थितः शम्भुर्घोरं हुंकारमकृत । अनुपदमेव तदैन्द्रं व्याकरणं भुवि प्रणष्टमासीत् । सर्वे च वररुचिप्रमुखाः पाणिनिना पराजिता मूर्खाश्चाभूवन् । अतर्कितोपनतं तदत्याहितमसहमानो वररुचिः संचितं द्रविणं हिरण्यगुप्तस्य वणिजो वशे निक्षिप्य, तच्चोपह्वरे भार्यायै कथयित्वा, तया चानुमतः, शंकरमाराधयितुं तपसे तुषाराद्रिमगमत् ।

उग्रं तपश्चरितुं गतस्य भर्तुः सर्वथा मङ्गलमाशंसमाना पतिव्रतानां धुरि स्थिता उपकोशा, प्रत्यहं भागीरथ्यां स्नानमाचरन्ती नियतव्रता दैवतान्यपूपुजत् । कदाचिदिमां त्रिपथगातीरे चरन्तीं प्रतिपच्चन्द्रलेखामिव जनलोचनहारिणीं राजपुरोधाः, दण्डाधिपतिः, कुमारसचिवश्च, यदृच्छया दृष्ट्वा स्मरसायकलक्ष्यतामयासिषुः । चिरात्स्नात्वा सायमायान्तीं तां साध्वीं कुमारसचिवो मध्येमार्गं हठादरौत्सीत् । अनाथा च सा कमप्यात्मरक्षणोपायमपश्यन्ती तत्क्षणोत्प-

न्त्रया प्रतिभया तमगादीत्—— 'भद्र, अहं सत्कुलोत्पन्ना प्रवासस्थित-भर्तृका च । नायमुचितः कालो देशो वा हठात्करणस्य । श्वो मधू-त्सवाक्षिप्तचित्ते पौरलोके, रात्रौ प्रथमे प्रहरे मद्गृहमागम्यतां त्वया' इति । सोऽपि तथेत्युक्त्वाताममुचत् । ततः किंचिदन्तरं व्रजन्ती कामार्तेन पुरोधसा न्यरोधि । अस्यापि पूर्ववदेव तस्यामेव रजन्यां द्वितीये प्रहरे संकेतकं दत्त्वा, पतिमेव मनसा ध्यायन्ती, प्रसर्पन्ती च किंचि-दन्तरम्, दण्डाधिपेन गृहीता, तस्यापि तामेव त्रियामां निर्दिश्य तृतीये प्रहरे संकेतकं विधाय, दैवात्तेनापि मुक्ता, आत्मनो भागधेयमेव पुनः पुनर्निन्दन्ती, 'भगवन्कृतान्त, किमेवं मां धूर्ता-नामामिषीकरोषि । वरमुपरताहं भङ्गुरेण शरीरेण, न तु चारित्रेण । 'वरं पत्यौ प्रवासस्थे मरणं कुलयोषितः । न तु रूपारमल्लोकलोचनापातपा-त्रता ॥' इति मनसि चिन्तयन्ती परं विषादमनुभवन्ती भृशमरोदीत् । प्ररुदितां च चेट्यस्तामाश्वास्य 'काममेते तत्रागच्छन्तु; अनुभवन्तु च स्वाविनयस्य फलम्' इत्यवादिषुः । सतीललामभूतया मुहुर्मुहुः स्वं वपुरनुशोचन्त्या निराहारयैव भर्तृगुणसंकीर्तनव्यापृतया तया क्षण-चतुष्टयमिवानायि सा यामिनी । अहर्मुखे च व्यसर्जि काचि-च्चेटी ब्राह्मणपूजार्थं हिरण्यगुप्तस्य सकाशात्किंचिद्धनमाहर्तुम् । सो-ऽपि वणिक् स्वयमेवागत्य, उपकोशामुपह्वरे समाहूय, 'भद्रे भजस्व मां ते लावण्येन मोहितम् । नो चेदसाक्षिकं भर्तृदत्तं द्रविणं न दास्यामि' इति निर्लज्जमजल्पीत् । अशनिहतेव च कम्पमाना सा क्षणमितिकर्तव्यतामूढा 'का गतिः । अयमपि जाल्मस्तानेव धूर्ताननुकरोति' इति हृदये मन्त्रयन्ती तस्यापि निर्दिष्टायां क्षणदाया-मेव शेषे यामे संकेतकमतानीत् ।

अथ प्राप्तायां संकेतकयामिन्याम्, विचक्षणास्तस्याश्चेट्यः पूर्वमेव संमन्त्र्य, कस्तूरिकादिसंयुक्तं तैलमिश्रं प्रभूतं कज्जलं तल्लिप्तांश्चेलखण्डांश्च सज्जीकृत्य, बृहतीं मञ्जूषामेकामभ्यन्तरे निक्षिप्य, तेषां दुर्विनीतानामागमनं प्रत्यैक्षिषत। प्रथमे प्रहरे कृतमहावेषः कुमारसचिवः साध्व्यास्तस्या निकेतनं निश्चयलक्षितं प्राविक्षत्। 'अस्नातं त्वामस्मत्स्वामिनी न स्पृशेत्' इति चेटीभिरादरेण प्रोक्तः स तथेत्यभ्युपगम्य ताभिः सहाभ्यन्तरं गतः, अन्धकारमयेऽन्तर्गृहे गूढं वसनाभरणान्यपनीय, कज्जलमलिनं तद्दत्तं चेलखण्डं परिधाय, आनखशिखमभ्यङ्गभङ्ग्या ताभिरर्पितं तैलकज्जलमङ्गेष्वालिम्पन्, कृतकृत्यमात्मानमजीगणत्। एवमभ्यङ्गसुखमन्धकारेऽनुभवन्, मनोरथशतानि च गणयन्, गतप्रायमपि प्रथमं यामं नाज्ञासीत्। द्वितीये प्रहरे पुरोधसमागतमालोक्य ससंभ्रमास्ताश्चेट्यः, 'वररुचेर्मित्रमेष पुरोहितः पूर्वमनिवेद्यैवात्रागतः। किं कुर्मः। इहान्तरितो मुहूर्तं तिष्ठ' इति वदन्त्यो मञ्जूषायां तं निक्षिप्य, तां बहिर्दत्तार्गलामकार्षुः। तथैव पुरोहितोऽपि प्रलोभितस्ताभिः स्नाननिभान्नीतस्तमसि कृतकज्जलाभ्यङ्गः, दण्डाधिपस्यागमनसमये मञ्जूषायामाद्यवदक्षेपि। एषोऽपि कज्जलमर्दनैः प्रोत्साहितः, आगते वणिजि तामेव पेटिकामगाहिष्ट। त्रयोऽप्येते नराधमाः, अन्धतामिस्रवासमभ्यस्यन्त इव मञ्जूषायां परस्परं स्पृशन्तोऽपि भिया ह्रिया चान्योन्यं नालापिषुः। आत्मनो वपुर्भागधेयं चोपालभमाना अवनतानना सतीमणिरुपकोशा, चेटीभिर्नुन्ना कथंकथंचिदात्मानं संस्तभ्य, पुरतः स्थितं वणिजम् 'तन्मे भर्त्रा न्यासीकृतं धनं देहि' इति अनाधिष्ट।

(क्रमशः)

# क्षत्रियरमणी ।

---

त्यपि दूरे महोन्नता पर्वतश्रेणी । तदात्वे च संध्यातीपाततमःसमारम्भयोर्मध्यमः कालः । देवः श्रीदिवसेश्वरो वीराणामेषां पृष्ठतो गिरिशिखरेणादृश्यो भवति । अपरतश्च भगवान् तुहिनभानुरुदयोन्मुखीभिर्निजाभिरंशुमालाभिर्विशदयति स्म नभोमण्डलम् । तदेवं शबलमुभयमिदं तेजो रमणीयमदृश्यत । सौवर्णैः राजतैश्च जलद्रवैरनुलिप्त इव निखिलोऽप्यवकाशो व्यशोभत । वियति च विरलदर्शना द्वित्रास्तारका झरीप्रपातं सासूयं निध्यायन्त्य इवावलुलोकिरे । मातरिश्वा चाचलशिखरैरथ च तरुशिखरैः पदे पदे विघ्नितगमनो मन्दं मन्दं वाति स्म । सादिनस्ते मनोनयनहारिणीं शोभां तां रसेन निर्निमेषं निध्यायन्त एव मार्गात्तस्मात्पल्लीगामिनं पन्थानमभिप्रपेदिरे । अथ तदानीं सूर्यदेवाच्छादकं गिरिशृङ्गं दूरीबभूव । एकतोऽखिलोऽवकाशो द्रुतकनकानुलिप्त इवापरतश्च रजतद्रवसिक्त इवादृश्यत ।

चित्रं दर्शनीया शोभा । मार्गे तस्मिन्नेकतो दिवाकरकरविसरः, अपरतश्चन्द्रिका । एकतः अहः, अपरतः सायंसंध्या । पुष्पवतोस्तया शोभाविसरंगमनिकया समुपजायमानः कौतुकावहः शिल्पसारो न सर्वतोऽदृश्यत । परं पर्वतीयेषु केषुचिदेव प्रदेशेषु सविशेषं रम्यतामावहत् । ईदृशानि च दृश्यानि सादिनामेषां नैव नूतनानि कामम्, अथापि तानि तेषां नयनमपूर्वदर्शनानीव क्षणे क्षणे आचकृषुः । एवमपहृतनयनानां तेषाम्, आयतया तनुलतिकया युवतिः कापि पुरतः समदृश्यत । सा किल शिरसि क्षीरघटसनाथया पिटाकिकया

महिष्यौ द्वे पृष्ठनिहिताभ्यां कराभ्यां चारयन्ती धीरमागच्छन्ती मार्गे तस्मिन्नेभिः संदधे । दृष्ट्वैव तां सर्वे सप्रत्यभिज्ञं परस्परस्य संलपन्तो हसन्तश्चैव संचेरुः । युवराजस्तु दृष्टमात्रायामस्यां जवेन तुरङ्गमं तदभिमुखं प्रावर्तयत् । पञ्चम्या धारया स तमुवाहेति नासौ मध्ये-मार्गं तमवस्थापयितुमपारयत् । तुरगः क्षणाभ्यन्तर एव तस्या उपरि पतिष्यन्निव समभावि । सर्वे सैनिकाः सकौतुकभयमवलोक-यन्तः स्तब्धा अतिष्ठन् । तरुणः सः 'भद्रे! अपसर अपसर' इति ससंभ्रममशब्दायत । 'संभ्रमेणानेन ससंरम्भमपगच्छेदेषा नूनम् । ततश्चावश्यमेवाधो निपतेत् दधिपात्रम् । तत एनां विह-सिष्यामो वयम्' इत्येव असौ अभावयत् ।

युवत्या महिष्याश्च मध्येन तुरङ्गमं गमयितुमिच्छन् युवराजः खलीनमेकतोऽशिथिलयत् । अनुचरा दूरीकृतहासाः सचकितमवलो-कयन्त आसन् । बाललीला प्राणाघाते परिणमतीति तेऽमन्यन्त । तरुणी सा अवगतयुवराजाभिप्राया स्वल्पमप्यचलन्ती मार्गं चाप्रय-च्छन्ती महिष्या विषाणेन तिरो धारितेन युवराजस्य तुरङ्गमस्पर्शयत् । आकस्मिकेनानेन गतिरोधेन भीतो वाजी सवेगमपथे धावितुं प्रारभत । युवराजस्तदात्वे अन्यमना आसीदिति सद्य एव तुरङ्गमादपतत् । यच्च कौतुकमयमाशंसत, तत्किल संवृत्तमासीत्; परमयं युवराजस्या सीत् । निपतितमात्र एव युवराजे तमुत्थापयितुमेषा सवेगमुपासीदत् । तावत्येव सर्वेऽनुचरा आसीदन् । विनैवान्यस्य साहाय्यं युवराजः स्वयमेव समुत्तस्थौ । 'न मया मतिपूर्वकं विरचितम् । तत् क्षन्तव्यम्' इति युवतिः सा न्यवेदयत् । लज्जापरवशतया युवराजो नास्यै किमपि प्रतिवक्तुं पारयामास । सा तु शान्तेन मनसा स्वं पन्थान-

माससाद । गमनसरणिरस्याः परिशील्यमाना नूनमदृष्टविस्मयेयमित्येव प्रतिभासयेत्; तथा हि सा धीरं याति, अविकृता च ।

अतिक्रान्तायां तस्यां युवराजो निजं शरीरं सममार्जयत्; देवस्यानुग्रहेणाक्षतमेवासीत् शरीरम् । सर्वे चैकैकशो हसितुमारभन्त । स्वयमेव शान्तो हासकोलाहलः ।

अन्यतमः— युवराज! मन्ये, नास्माकं चिन्तितं सिध्यति ।

युवराजः— अद्यैतावता समापयामो वा? गृहान्तं यामो वा?

अपरः— इदं नास्माकं सुदिनम् ।

इतरः— ग्रामान्तं गत्वा गृहवृत्तान्तं च ज्ञात्वा प्रत्यावर्तेमहि ।

युवराजः— कथमहं ग्रामे मुखं दर्शयेयम्; तुरगं धारयितुमपारयन् पतितः केन मुखेन जनानां पुरतो भवेयम् ।

अन्यः— अस्त्वेतत् तुरगस्य स्थिरीकरणम् । अद्य स्थिरैः प्राणैः प्रत्यावर्तामहे यदि, पर्याप्तमेतावता ।

ग्रामान्तं गमनं प्रत्यबध्यत । सर्वेऽपि केदारस्य समीपेऽवस्थिताः सूर्यास्तमयलीलामनुवर्णयन्तः कामपि कालकलामयापयन् । क्षणान्तरे च पथिकः कोऽपि तेन पथा आगच्छन् ददृशे । स किल ग्रामीणोऽवालोक्यत । दृष्ट्वैव तं विश्वम्भरस्त्वरितमुत्थायोपससर्प; 'भ्रातः! किं ते नाम?' इति च पर्यन्वयुङ्क्त । ग्राम्योऽसाववलोकितेन एनमपरिचितमवगत्य, उद्धतेन स्वरेण 'किं तेन ते तात' इति प्रत्यवदत् ।

कोपवशं गतो विप्रः सः 'नाम्नि पृष्टे केयं चपलता! ग्राम्यस्येयमुद्धतिः' इति प्रत्यपादयत् । ग्रामवासी कोपावेशेन विशेषतो रक्ताभ्यां नयनाभ्यां दण्डकाष्ठमुद्यच्छन्, तीव्रं विप्रमवालोकत ।

विप्रः— कष्टम्! मन्ये, नेतः परं जीवितमवशिष्यते। किमहं न जानामि कोऽहम्?

ग्रामवासी— को भवान्? उन्मत्त इव लक्ष्यते। अपेहि। पुनर्वाचं विसृजेद्यदि, सद्यो विदलितेन शिरसा द्विधा भविष्यति।

विप्रो विश्वम्भरः स्वयं युवराजेन सभाज्यमानः सर्वैः सादरमुपचर्यमाणश्च कथमिदं तितिक्षताम्? अयं केवलः कोऽपि ग्राम्यः।

विप्रः— किं वा अहमीदृशैर्वचनैर्बिभियाम्? कं वा मन्यते मां भवान्? पूर्वोत्तरपरामर्शेन समाभाषस्व। मा स्म स्वैरमालपः।

ग्रामीणः— (पदा भूमिमाहत्य) पशो! केन सह भाषसे। पुरतः क्षत्रियो वर्तत इति मनसि कृत्वा भाषस्व।

विश्वम्भरः— क्षत्रियो वा? भवादृशाः कति कति मया न दृष्टाः क्षत्रियाः? किं वदामि कालस्य कलेर्विलसितम्? किं वा करोमि? अन्यथा पुनरहं ब्रह्मवर्चसेन सद्य एव भवन्तं भस्मीकुर्याम्।

क्षत्रियोऽसौ हासं संस्तम्भयितुं नापारयत्।

ब्राह्मणः— (दन्तान्प्रदर्शयन्) पुनरपि हससि। पश्य, न चिरात् यत् भवति। युवराजाय निवेद्य........

एतावत्येवोभौ मृगयू, दूरादेव विलोक्य कलहायमानं विश्वम्भरम्, सवेगमासाद्य च तं क्षत्रियम्, 'महाशय! नास्य वचनं किमपि मनसि कर्तव्यम्। अयमुन्मत्त इति गृह्यताम्' इति व्यजिज्ञपताम्।

क्षत्रियः— एवमेतत्। उन्मत्त इत्येव प्रतिभाति।

श्रुत्वा चेदं सकोपावेगं वेगेनान्यतोऽपजगाम विश्वम्भरः।

अन्यतरो मृगयुः— महाशय! विषयं कमपि विज्ञातुं कौतुकेन समागतौ स्वः। यदि प्रतिपादयितुं संमन्यते तत्रभवान्; सह-

यशो धन्यवादानुपहरेव । अद्य प्रातरन्धयाढव्या आसन्ने जोनलक्षेत्रे कापि कन्या जोनलगोपी वीक्षिता । का सा? क निवसति?

क्षत्रियः— सा मे पुत्री । अस्मिन्नेव ग्रामे वयं निवसामः ।

कोपेन गच्छन्विश्वम्भरः, आकर्णितक्षत्रियवचनो हरिणप्लुतेन पलाय्य, युवराज़ायाखिलं न्यवेदयत् । स चावगत्य वृत्तान्तमखिलम्, 'अत्रागत्यावलोकनीयोऽहम्' इति क्षत्रियमभ्यर्थयितुमात्मनो मित्रं वेगेन तत्र प्रास्थापयत् । स च सवेगमुपसृत्य, सविनयमिव न्यवेदयत्— 'महाशय! मीवारदेशस्य युवराजः श्रीमतो दर्शनं प्रतिपालयति । दयया आगत्य दर्शनम्............( अर्धोक्त एव )

क्षत्रियः— (सगर्वम्) महाशय! क्षम्यताम् । स भवतु मीवारस्य युवराजः । अहमस्य ग्रामस्याधिपतिः । य एनं ग्राममासीदति, तेनाहं प्रथममागत्य द्रष्टव्यः । इयं चिरानुवृत्ता परिपाटी । अपरथा अभ्यागतस्यायमगौरवाय । युवराजो निजे करणीये लोपमरचयत् । अहं तु न संमन्ये मदीये करणीये न्यूनतामापादयितुम् । मीवारयुवराज इत्येतावता नाहमात्मनो मर्यादां शिथिलयितुं संमन्ये । इतरसाधारण्येनैव युवराजेऽपि वर्तेय । नियमस्य नाधिकारिभेदो वर्तते ।

श्रुत्वा चास्य वचनं स्तब्धोऽवातिष्ठत युवराजसंदेशहरः । आः, चित्रम्, सामान्यस्य कस्यापि कियानात्ममर्यादापालने समादरः । कियती च श्रद्धा शिष्टाचारानुपालने । कियच्च गाम्भीर्यं वाचो विसर्गे । यावता चेदमाश्चर्यमवसीयते, तावदन्यदाश्चर्यमुपनिपतितम् । क्षत्रियवचनस्य युवराजः 'श्रीमतां संनिधिमुपगम्य नाहमत्रभवतोऽवालोकयमिति मर्यादातिक्रमस्यास्य प्रायश्चित्ततया तत्रभवतां तनयां परिणिनीषुः सज्जोऽस्म्यर्थयितुम्' इति स्वयं प्रतिवदन् शुश्रुवे ।

न तत्रत्यः कोऽपीदं विशश्वास । किं सत्यमेष युवराजः शालिगोपीं पाणौ चिकीर्षति ? नेदमाश्चर्यमन्तमगमत् । श्रुत्वा युवराजस्य वचनं सगर्वं स प्रत्यवदत्-- अनेन प्रस्तावेन मे यादृशी सभाजना विरचितेति युवराजो मन्यते; न तादृशीं तामहमवगन्तुं प्रभवामीति विषत्तव्यं भवति ।

एवं वदन्नेवासौ क्षत्रियो युवराजस्य प्रत्युत्तरमप्रतिपालयन्नेवापजगाम । सर्व एव विस्मयक्रोधावमाननैः स्तब्धा अभवन् ।

येन दर्पेणायं तदा युवराजादिभिः सहोद्धतं व्याजहार, स गृहमुपगतमात्रस्य तस्य चूर्णीबभूव । अवगतवृत्तान्तायाः 'किमेवमाचरितम् ? केनेदमौद्धत्यम् ? मीवारयुवराजे कन्यां प्रार्थयमाने को वान्यो दैवोपहताद्विचारयेत् ? किं वा कृषीवलवृत्त्या जीवनमेव श्रेय इति भाव्यते ? हन्तास्माकमभाग्यपरिपाटी । प्रशंसनीया नूनं भवतामौद्धत्यगमनिका !' इत्येवमादिभिः सहधर्मिण्या उपालम्भवचनैः परिवृत्तस्वभावः क्षत्रियोऽयं पश्चात्तापमुपजगाम । 'भर्तुरपराधाः क्षन्तव्याः । पुत्री परिणीयताम्' इति पुरोहितमुखेन तस्य क्षत्रियस्य महिषी युवराजाय न्यवेदयत् ।

युवराजश्च संतुष्टान्तरङ्गः परेद्यव्येव शुभे मुहूर्ते रमणीं तां पाणावग्रहीत् । यथाकुलाचारं च निरवृतत्पाणिपीडनमहोत्सवः । मृगयार्थी पुरात्प्रस्थाय सह मृगाक्ष्या प्रतिनिवृत्तोऽयं सर्वैः पौरैः सभाजितः ।

येन द्वादशे वयसि बलवद्रिपुकुलं विजित्य, मीवारराजकुलं विख्यातं विरचितम्; स कुमारहम्मीरः अस्या एव गर्भात्समजनि ।

श्रीशैलताताचार्यः ।

---

# पुस्तकसमालोचना ।

## रूपावतारः ।

अयं हि व्याकरणग्रन्थः श्रीमद्भिः मद्रपुरस्थराजकीयाङ्गलकलाशालागीर्वाणभाषानिरूपकपदमधितिष्ठद्भिः म. रङ्गाचार्यमहाशयैः अनेकान् तालपत्रकोशान् संपाद्य सम्यक् परिशोध्य मुद्रापितः। अत्र ग्रन्थे तत्तत्प्रक्रियोपयोगीनि पाणिनीयानि सूत्राणि तत्तत्स्थलानुरोधेन निवेश्य अर्थापितानि । सूत्रार्थबोधिका वृत्तिश्च नितरां सरला सुगमा च। अयं च ग्रन्थकर्ता सूत्रपाठभेदेष्टयादियोजनविषये काशिकावृत्तिं प्रमाणयन्नपि, बालबोधाय काशिकाकारानुसृताम् अष्टाध्यायीस्थक्रमेण सूत्रार्थविवरणरीतिं परित्यज्य, नवीनामेव रीतिमवलम्ब्य प्रक्रियाकौमुदीकारादीनामपि स्वयं मार्गदर्शी बभूवेति महदेवेदं बहुमानास्पदं ग्रन्थकर्तुः ।

संपादकमहाशयैश्च ग्रन्थारम्भे सरलसंस्कृतपदगुम्भिता संक्षिप्तमधुरा कापि भूमिका विलिखिता। तस्यां च प्रथमतः-- अस्य रूपावतारस्य कर्ता धर्मकीर्तिरेव; न तु बेर्नल्महाशय आपर्ट्महोदयाभ्यां कर्तृत्वेन अध्यवसितः कृष्णदीक्षितः-- इति सप्रमाणमुपपादितम् । ततश्चास्य कर्ता धर्मकीर्तिः कः, कदा वा स्यादिति विचारः प्रक्रान्तः । तत्र चैवं निर्णीतम्-- काशिकावृत्तिमनुसरंश्चायं धर्मकीर्तिर्नवमशतकादनन्तरोत्पन्न इत्यभ्युपेयं भवति; यतः 'प्रायशः क्रीस्ताब्दीये अष्टमे नवमे वा शतके काशिकावृत्तेः पूर्तिरासीदिति नवीनविचारणाविशारदानां मतम्।' क्रिस्ताब्दीयचतुर्दशशतकपूर्वार्ध-

समुत्पन्नस्य श्रीमद्वेदान्तदेशिकसमकालिकस्य श्रीसिङ्गयमाधवेन्द्रराजस्य मन्त्री यः पोतराजः, तदनुजपुत्रो गौरणार्यश्च स्वकृते लक्षणदीपिका-ग्रन्थे रूपावतारस्य नाम लिखति । सिंहलद्वीपाधिपतेः प्रथमपराक्रमबाहोः सभायां संघराजाभिधः कश्चित् बौद्धभिक्षुरासीदिति, पराक्रमबाहोश्च राज्यकालः क्रिस्ताब्दीयद्वादशशतकोत्तरार्धे आसीदिति च सिंहलराजवर्णनपरान्महावंशग्रन्थादवसीयते । 'एवं च क्रिस्ताब्दीयनवमशतकात्पश्चात् त्रयोदशशतकात्प्रागेवैष वैयाकरणो धर्मकीर्तिरासीदिति सिद्धं भवति ।'—इति ।

निपुणं परीक्षमाणाश्च वयम् 'एष रूपावतारस्तावत् परिक्लप्तो बालप्रबोधनार्थमेव कृतिकर्तृप्रतिज्ञातलाघवसुविभक्तत्वार्जवगुणप्रशस्यः पाणिनीयव्याकरणजिज्ञासूनां तादृशसाह्यापादने निरुपमो निरवद्यश्च' इति यत्सत्यमभिप्रेमः ।

संप्रति च प्रथमो भागः परं मुद्रितः । विषयतश्च सिद्धान्तकौमुदीपूर्वार्धतुल्योऽयं भागः । मुद्रणरीतिश्च परिशोधनवत्समीचीना । एवमत्युपयुक्तस्य पुस्तकस्य मुद्रणे सूत्राणां पृथक्पङ्क्तिकतया निवेशनम्, सूत्रवृत्त्योरितोऽपि किंचित्स्थूलानामक्षराणामुपयोजनं च समुचितमाकलयामः । अन्ते योजिता च बृहती उदाहरणसूची सर्वथा हृदयं हरत्यस्माकम् । अनुकरणीयोऽयं सर्वैरपि ईदृशमुद्रापणपरिष्करणप्रथमावतारः । इतोऽपि वयं द्वितीयस्य भागस्य नचिरादवतरणमाशासानाः श्रीरङ्गाचार्यमहाशयानां प्रशंसनीयं व्यवसायमभिनन्दामः । वहामश्च तेषु पुस्तकं प्रेषितवत्सु सर्वात्मना कृतज्ञताम् ।

नेकरागवस्त्रध्वजप्रभाविस्तारितापूर्वसंध्यामयोध्यां पुरीं पश्यतः, कचिददर्शनादुन्मनीभूतमानसं मान्यमृषिजनं गत्वा तदाश्रमेषु दर्शनेनानन्दयतः, कचिद्दर्शनपथावतीर्णेषु शीर्णदेवतायनेषु कर्मारम्भाय सपदि संपादित्तपूजासत्कारान्सूत्रधारान्व्यापारयतः, कचिदासन्नसेवकनिवेदितदानविच्छेदासु दानशालासु दीनानाथपथिकसार्थस्य सविशेषमन्नपानशयनौषधादिदानमधिकृतैः प्रवर्तयतः, मार्गघटितं च सूक्तवादिनं दरिद्रयाचकसार्थमर्थसंभारेण भूरिणा कृतार्थीकुर्वतः, तीव्रतिग्मांशुकरनिपातोपतापितः स्वदुःखमाचिख्यासुरिव प्रत्याससाद मध्याह्नसमयः ॥

क्षितिपालशिथिलितकरग्रहाः स्वेदनिःश्वासानिव समुत्स्रष्टुमुष्णान्नभस्वतः स्वैरस्वैरमारेभिरे ककुभः । तरुमूलदृश्यमानश्यामपरिमण्डलच्छायावलया बलवदातपदाहविच्छेदाय देहनिहितार्द्रपद्मिनीदला इवालक्ष्यन्त नगरोपान्तवनभुवः । पर्याकुलितपर्यन्तगृहनिवासिगणिकाजनाः सवेदनाः सुरगृहाङ्गणेषु सुखविश्रान्तदेवलकवदनवातनिर्भराध्मातकुक्षिविवराः शृङ्खलाधूतवेलाशङ्खाः प्रभिन्नशङ्खक्षरन्मदासारसिक्तराजपथाः प्रतस्थिरे जलावगाहाय सरयूमग्रतः प्रहतपटुमृदङ्गपटहाः पट्टहस्तिनः । कपाटदारुपाशकनिर्दयास्फालन-

---

सूत्रधाराः शिल्पिनः । करः किरणः, राजग्राह्यभागश्च ।

**क्षितीति** । करग्रहः विवाहः, बलिग्रहणं च । पर्यन्तगृहं देवालयसमीपवर्ति गृहम् । देवलकः देवपूजकः । वेदनापनोदनाय मान्त्रिकैर्देवलकैः फूत्कारो मुखे क्रियत इत्याचारः । शृङ्खलाभ्यः लम्बमानाभ्यः शृङ्खलाभ्यो विधूताः आकृष्य विक्षिप्ताः वेलाशङ्खाः ध्वनिभिस्तत्तत्कालसूचकाः शङ्खाः यैस्ते तथोक्ताः । शङ्खः कर्णसमीपास्थि । स्फुटितान्नाडीचक्रादस्थितो वा मदः प्रवहतीति गजशास्त्रम् । निर्णयसागरमुद्रितपुस्तके अत्र विद्यमाना दुःसहा अशुद्धयो यथामति वारिताः । दारु-

वाचालानि गृहोन्मुखापणिकसंवृतपण्यासु विपणिवीथीषु प्रत्यापणद्वारमघटन्त कालायसतालकानि ॥

क्रमेण च कठोरतां प्रपन्ने दिवसतारुण्ये, किंचिदुपरतपौरकोलाहलायां नगर्याम्, वन्दिताचार्यचरणशिष्यगणसंव्रियमाणनिजनिजपुस्तकासु क्षणमात्रप्रवृत्तयदृच्छालाभरमणीयासूक्तिष्ठन्तीषु विद्यामठव्याख्यानमण्डलीषु, अनुचरगृहीततैलामलककङ्कतेषु प्रस्थितेषु स्नानाय सरयूतटानि तिलदर्भपात्रिकापूर्णपत्रपुटपवित्रपाणिषु श्रोत्रियेषु, गृहाभिमुखतरुशाखासीनवायसकुलावलोकितबलिषु हूयमानेषु वैश्वदेवानलेषु, अध्ययनमुखरेष्वितस्ततो भ्रमत्सु गृहपतिभवनवनखण्डभ्रमरेषु भिक्षाचरेषु, प्रवातपट्टशालावलम्बितपञ्जरे पाकपिञ्जराणि कबलयति तरुफलानि संवृतालापे शुकशारिकाकलापे, भूमिपतिरवलोकिताभिमतनगरीप्रदेशः, समासादितावसरैः श्रवणमूलमागत्य मध्याह्नकृत्याय प्रवर्तितो मागधश्लोकैरधिकृतैश्च राजलोकैः, प्रववृते शनैः शनैः स्वनिवासमागन्तुम् ॥

अवहिताधोरणचालितवारणश्चोर्ध्वीकृत्य विधृतेन तत्कालमाक्रान्तचूडामणिं दिवसमणिमदृष्टपूर्वमाराद्द्रष्टुमागतेन पौर्णमासीहिमगभस्तिनेव निवारितललाटंतपातपो धवलशिलातपत्रेण, प्रथममेव सत्वरप्रविष्टैरितस्ततः प्रहितदृष्टिभिर्द्वारपालैर्निरीक्षिताशेषकक्षान्तरमन्तरिक्षोल्लेखिभिरनेकशतसंख्यैः सितप्रासादैः सर्वतः समाकुलं राजकुलमाससाद ॥

द्वारदेशे च तस्य विधृतवाहनास्तिमितमावासगमनाय तिर्य-

---

पाशकः दारुमयी शृङ्खला । 'द्वारयन्त्रं तु तालकम्' इति हेमचन्द्रः ।

गुन्नमितमुखसंज्ञया प्रस्थाप्योभयतः पार्थिवसमूहम्, अन्तः प्रविश्य द्वितीये द्वारे वारणादवततार । निवारितपरिवारलोकश्च द्वारपालैः, परिमिताप्तराजपुत्रपरिवृतश्चरणाभ्यामेव गत्वा मध्यमां मण्डपिकाम्, तन्मध्यभागे तत्क्षणोपलिप्तायां निरन्तरक्षिप्तसरसपुष्करसुरभेरास्थानवेदिकायाः पृष्ठभागे प्रतिष्ठापितं दन्तपट्टमध्यास्त । व्यपास्तसकलविहारकालकल्पितवेषः प्रक्षालितचरणपल्लवश्च परिचारकगणेन, शिशिरवारिणा प्रक्षाल्य मुखेन्दुम्, अग्रतः स्थापिते मणिपतद्ग्रहके प्रक्षिप्य कतिपयानुदकगण्डूषान्, उपस्पृश्य, परिमृज्य वस्त्रपल्लवेन सहस्तपल्लवं वदनम्, आदरगृहीतजलार्द्रतालवृन्तेनान्यतमपरिचारकेण मन्दमन्दमुपवीज्यमानो मुहूर्तमिव स्थित्वा, अङ्गणोपान्तपुञ्जीभूतभूरिभुञ्जानकलोकम्, औत्सुक्यतरलारालिकश्रेणिसंचार्यमाणानेककाञ्चनस्थालीसहस्रम् आहारमण्डपमयासीत् ॥

तत्र नृपासनासन्ननिषण्णभिषजि संनिधापितशुकसारिकाचकोरक्रौञ्चकोकिलप्रमुखपत्रिणि यथास्थानमुपविष्टेन प्रधानपार्थिवगणेनान्येन च प्रणयिना राजलोकेन परिवृतः कुर्वन्नन्तरान्तरा सह सुहृद्भिर्नर्म भोजनकर्म निरवर्तयत् । उपस्पृश्य च समाघ्रातधूपधूमवर्तिः, उद्वर्त्य शरीरं कर्पूरमृगनाभिसंभेदसंभृतामोदेन घ्राणेन्द्रियानन्दिना चन्दनद्रवेण, अग्रहस्तेन गृहीत्वा च ताम्बूलम्, अप्रतिकूलभाषिभिरशेषकलाशास्त्रकृतपरिचयैः परचित्तविद्भिः सुहृद्भिरनुगम्यमानः, गन्धसलिलच्छटासेकशिशिरीकृतसकलभित्तिं क्षणापतत्पवनगुञ्जन्मणिगवाक्षपुञ्जामपराह्णरम्यामावासहर्म्यशिखरप्रान्तवर्तिनीं दन्तवलभिकामगच्छत् । तत्र च सितस्वच्छमृदुदुकूलोत्तरच्छदम्

---

**द्वारेति** । पुष्करं पङ्कजम् । पतद्ग्रहः कलाची । आरालिकाः पाचकाः ।

उदग्ररत्नप्रतिपादकप्रतिष्ठम् उभयपार्श्वविन्यस्तचित्रनेत्रगण्डोपधानं विद्रुमदारुपर्यङ्कमधिशयानः, तत्कालसेवागतैर्गान्धर्विकोपाध्यायैः सह वेणुवीणावाद्यस्य विनोदेन दिनशेषमनयत् । अस्ताशिखरपर्यस्तमण्डले च तरणौ उत्थाय कृतसकलसांध्यकृत्यो विधाय देवतासपर्यामागृहीतविकटशृङ्गारवेषः, घटितपरिवेषैः सर्वतः परिवृतः शरीररक्षाविधावधिकृतैर्वीरपुरुषैः, अनेकभङ्गरचितरङ्गवल्लीतरङ्गितमसृणमणिकुट्टिमोत्सङ्गम्, क्वचित्सुखासीनसचिवपुत्रविचार्यमाणनव्यकविनिबद्धकाव्यगुणदोषविभागम्, क्वचिद्वाञ्छिताधिकारसेवकचारपरिवार्यमाणविकटवेत्रासनोपविष्टप्रधानसचिवम्, क्वचिल्लिख्यमाननिःसंख्यराजाज्ञालेखमुद्रासिन्दूरपूरारुणीकृतदिवम्, सर्वतश्च प्रकटिताहंकारैः परुषहुंकारवित्रासितजनैरुद्धतांस्तर्जयद्भिर्मान्यलोकं कृताञ्जलिपुटैरावर्जयद्भिर्महाप्रतीहारैः कृतावेक्षणम्, द्वारदेशादपक्रान्तसकलपदातिपरिवारैरुदंशुमणिमुकुटभास्वरशिरोभिर्महादण्डनायकैरध्यासितमध्यम्, अतिभूयस्तया च राजलोकस्य कृच्छ्रलभ्यनिर्गमप्रवेशावस्थानमास्थानमण्डपमगच्छत् ॥

तत्र च नृपतिर्देवताराधनव्यतिकरेण चिरकाललब्धावसरम् अतिदूरदर्शितादरैः प्रधानदौवारिकैः प्रवेश्य प्रवेश्य प्रत्येकशः कारितप्रणामम् उपनीतविविधोपायनकलापं द्वीपान्तरायातमवनीपतीनां प्रधानप्रणिधिलोकम् अवलोकनासनदानसंभाषणादिना यथोचितं प्रयुक्तेनोपचारेण पूजयित्वा, स्थित्वा च क्षणमास्थाने, विसर्जित-

---

वलभिका सौधाग्रप्रदेशः । प्रतिपादकाः पादाकाराः पर्यङ्काधारभूाः स्तम्भविशेषाः । पादुकेति पाठान्तरम् । नेत्रं सूक्ष्मवस्त्रम् । रङ्गवल्ली तण्डुलादिचूर्णैर्भक्तिरचना । 'आरचयन्ति रङ्गवल्लीम्' इति वामनः । दण्डः सैन्यम् ।

लोकः स्तोकशुचिसमाचारपरिचारकपरिवृतः सर्वतः कृतालोकेन पुरतः प्रसर्पता गतिरभसदोलायमानकज्जलस्निग्धनीलशिखाकलापेन दीपिकानिवहेन वेत्रधारिसमूहेन च समकालमावेद्यमानवर्त्मा शुद्धान्तमगच्छत् ॥

तत्र चाविरलविप्रकीर्णपुष्पबलिशबलितातिमसृणमणिकुट्टिमे सुकल्पितास्तरणतल्पतलोपशोभिनि शय्याशिरोभागनिहितधौतकलधौतनिद्राकलशे विशालवेश्मनि कृतावस्थानाम्, व्रतचरणेन भर्तुरदर्शनेन च प्रकामकर्शितशरीराम्, उज्झितालंकारामप्यकृत्रिमेण कान्तिसुकुमारतादिगुणपरिगृहीतेनाङ्गमाधुर्येण सुकविवाचमिव सहृदयानां हृदयमावर्जयन्तीम्, राकारजनिमिव ज्योत्स्नावदातनिर्मलाम्बरधारिणीम्, शक्रावतारगमने सबहुमानेन वैमानिकदर्शने सविस्मयेन राजलक्ष्मीनर्मभाषितश्रवणे सहासोल्लासेन, भाविखेचरचक्रसाम्राज्यसुतवरप्राप्त्यवसरे समारूढपरमानन्दनिष्पन्देन मनसा पार्श्ववर्तिपरिजननिवेद्यमानं पत्युरतिक्रान्तयामिनीवृत्तान्तमाकर्णयन्तीम्, अनतिदूरवर्तिनीभिः संनिधापितसितकुसुमदामदूर्वाक्षतदधिलवाभिरमलकाञ्चनस्थालविनिहितोच्छिखज्वलत्पिष्टमयमङ्गलप्रदीपाभिः प्रत्यग्रविरचितचतुष्कचारुणि मणिवितर्दिकापृष्ठपीठे प्रतिष्ठापितविततहेमपट्टाभिर्मुहुर्मुहुर्द्वारदेशप्रहितलोचनाभिः प्रतिपालयन्तीभिः क्षोणीपालागमनमतिरुचिरवेषाभिरन्तःपुरविलासिनीभिः परिवृतां मदिरावतीमद्राक्षीत् ॥

दृष्ट्वा च दूरविकसितास्मितार्द्रदृष्टिस्तां ससंभ्रमकृताभ्युत्थानां

**तत्र चेति** । कान्तिसुकुमारतामाधुर्याणि काव्यगुणाश्च । काव्यपक्षे अङ्गं शब्दार्थौ । अम्बरं वस्त्रं आकाशश्च । चतुष्कं चतुःस्तम्भो मण्डपः ।

करे गृहीत्वा तत्र मणिवेदिकापृष्ठवर्तिनि हेमविष्टरे न्यवेशयत् । उपविष्टश्च दक्षिणं पार्श्वमाश्रित्य तस्याः, क्रमेणैताभिः सकललौकिकाचारकुशलाभिर्वारवनिताभिः प्रयुक्तमवतरणमङ्गलमन्वभवत् ॥

अथ पुरोहितपुरःसरेषु विहितसायंतनस्वस्त्ययनकर्मस्वपक्रान्तेषु, प्रस्थितेषु यथास्वमधिकारसदनानि सौविदल्लेषु, प्रारब्धपरिहासपेशलकथासु स्थित्वा मुहूर्तमपसृतासु सव्याजं प्रियसहचरीषु, प्रकटिताङ्गरागशुक्तिषु प्रमृष्टमणिदर्पणासु समुत्सर्पितविलासदीपवर्तिषु संनिधापितकुसुमपटवासताम्बूलरत्नालंकारपटलकासु निर्यातासु शुद्धान्तशय्यापालिकासु, विविक्ततामुपगते द्वारकपाटसंघटनविसर्पदगरुघनसारधूपोद्गारसौरभे वासभवने, भूमिपालस्तिर्यगावलितकण्ठकाण्डेन वदनपुण्डरीकेण प्रत्यवयवं विलोक्य, स्पृष्ट्वा च करतलेन मन्दमन्दमानन्दनिर्यत्पुलककलिकाकोरकितानि मदिरावतीगात्राणि किंचिदाकुञ्चितेक्षणः सकृपः खिन्नाक्षरोद्गारं शनैर्व्याजहार— 'देवि, दृढमायासितासि । मयैव गाढकृतानिश्चयेन त्वदर्थसिद्ध्यर्थमध्यवसिते देवतासमाराधनविधौ किमिति निष्कारणमियन्ति वासराणि प्रकृतिकर्कशजनोचितैर्व्रतकर्मभिः कदर्थितोऽयं सततसुखोचितस्त्वयात्मा । किमर्थमेषा मदङ्कशय्याशयनलालिता ललिताङ्गि, शायिता निरावरणासु स्थण्डिलस्थलीषु स्थलारविन्दकेसरसरससुकुमारा काययष्टिः । अहो ते बालिशत्वम् । अहो अनालोचकत्वम् । अहो यदृच्छाकारिता ।' इत्यभिधाय सत्वराकृष्टसंनिकृष्टविलासोपकरणपटलकः सविलेपनां सालंकारां सतिलकां सावतंसां

---

**अथेति** । पटवासः सुगन्धचूर्णम् । पटलकं परिमण्डलः पात्रविशेषः ।

सशेखरां स्वकरेण तां चकार ॥

दृष्ट्वा च विरतनिमेषया दृष्ट्या सुचिरम्, अतिचारुणा तेन वेषग्रहणेन तैश्च तत्कालमाविर्भूतैः प्रियप्रेमातिशयजन्मभिः स्मरविकारैर्द्विगुणतररम्यदर्शनां सुदृढमाश्लिष्य शयनीयमनयत । तत्रैव च तया सह सुष्वाप ॥

स्वल्पावशेषायां च क्षपायाम्, अधोमुखविषाणकोटिनोर्ध्वचरणेन लाञ्छनमृगेण विधृतमूलाग्रभागव्यत्यये व्रजत्यस्तमस्ताचलचकोरकामिनीमन्दमन्दाचान्तविच्छायविरसचन्द्रिके चन्द्रमासि, प्रतिवेलमुन्नतानतशिखेषु तत्क्षणमुदयमानमरुणमिव वातायनान्तरेणावलोकयत्सु निजप्रभापहारभीतेषु वासभवनप्रदीपेषु, राजा राजतागिरिशिखरमधिरूढायाः श्वेतवसनस्रग्विलेपनालंकारकमनीयमूर्तेर्मदिरावत्याः शैलराजदुहितुरिव हेरम्बमम्बरादवतीर्य पुरःस्थितं कुचकुम्भविन्यस्तविकटपुष्करेण करेणाकृष्याकृष्य स्तन्यमापिबन्तं स्वप्ने सुरेन्द्रवाहनं वारणमपश्यत् ॥

उपशान्तनिद्रश्च मङ्गलतूर्यनिर्घोषेण सप्रहर्षमुत्थाय प्रथमतरमुत्थितायाः 'देवि, संपन्नास्ते गुरुजनाशिषः । प्रसन्ना समासन्न एव देवी राजलक्ष्मीः । भविष्यत्यशेषभूभृच्चक्रचूडारत्नमचिरेणैव सूनुः ।' इत्युदीर्य प्रकटितादरो मदिरावत्याः स्वप्नमाचचक्षे । सापि बद्धावधाना सविस्मयव्रीडमवनतेन शिरसा तमश्रौषीत् ॥

आनन्दभरविजृम्भमाणोद्दामपुलकोपचितसर्वावयवा च प्रतिपन्नेव सद्यो गर्भेण द्विगुणमुपजातशोभा तत्क्षणमजायत । स्थित्वा च किंचित्कालं प्रस्थिते राज्ञि, निर्गत्य रतिगृहाद्यथाक्रियमाणसुचि-

तद्व्यापारमन्वतिष्ठत् । अनतिबहुषु च व्यतीतेष्वहस्सु, ऋतौ स्नाता शरद्दिवसकरमूर्तिरिव भास्वरं तेजो बभार गर्भमुदरेण । चलितुमसहापि खेलालसं पदन्यासमकरोत् । कृष्णतारोचितामपि क्षीरधवलामधत्त दृष्टिम् । सततरागात्मनाधःकृतस्य मध्यस्य गौरवं पश्यन्तौ श्लथत्वमासेदुषो दयितनिर्दयाश्लेषसुखरसस्य च स्मरन्तौ शुचेव श्याममुखतां जग्मतुः स्तनौ । अनपत्यतादर्शनदुःखतप्तां निर्वापयितुमिव बन्धुतामायताः प्रसस्रुः पदन्यासेषु निःश्वासाः । प्रतिदिवसमुपचीयमानगर्भा च सा सकललोकाश्चर्यकारिणोऽभिलाषविभ्रमानभृत । तथा हि— वासभवनाङ्गणभ्रमिषु खिन्ना शरदा प्रसन्ने मानससरःपयसि ससखीजना स्नातुमियेष । विबुधवृन्दपरिवृता शाश्वतेषु सागरान्तरद्वीपसिद्धायतनेषु सांध्यमारब्धमप्सरोभिः प्रेक्षानृत्यमीक्षितुमाकाङ्क्षत् । अपास्तरणपरिकरं प्रकामगुणवन्तमपि भृत्यलोकं पर्यङ्कमिव सावज्ञमैक्षत । सर्वदिग्व्यापिना पत्युरपि प्रतापेन समतप्यत । कृतापकारेऽपि करुणापरा प्राणिनिवहे बभूव ॥

पूर्णेषु च क्रमेण किंचित्सातिरेकेषु नवसु मासेषु, सारतिथिवारकरणाश्रितेऽतिश्रेयस्यहनि, पुण्ये मुहूर्ते, यथास्वमुच्चस्थानस्थितैः कौतुकादिव शुभग्रहैरवलोकिते विशुद्धे लग्ने, लग्नचारुतादर्शनजातपरितोषायामिवोर्ध्वमुख्यां होरायाम्, अग्रत एव जातेन सहितमखिलप्रजाप्रमोदेनाद्वितीयरूपमजनयत्तनयम् ॥

---

**आनन्देति** । खेलालसं लीलामन्दम्, खे आकाशे लालसं उत्सुकं च । कृष्णा तारा कनीनिका, कृष्णतया नीलिम्ना रोचिता च । बन्धुता बन्धुसमूहः । अपास्तः रणपरिकरः, अपगतः आस्तरणपरिकरश्च यस्य तम् ।

॥ श्रीः ॥

# ॥ ब्रह्मसूत्रवृत्तिः ॥

---

इयं हि 'ब्रह्मतत्त्वप्रकाशिका' नाम ब्रह्मसूत्रवृत्तिः सुप्रसिद्धसर्वविधमहामहिमभिः श्रीसदाशिवब्रह्मेन्द्रैः विरचिता। यद्यप्यद्वैतमतानुसारिण्यो बह्वयो वृत्तयः सन्ति, समुपलभ्यन्ते च मुद्रिताः; अथापि तासु एकापि इयमिव ललितललितपदगुम्भिता, अतिविशदविषयविमर्शविभासुरा, प्रतिसूत्रं प्रत्यधिकरणं प्रतिपादं प्रत्यध्यायं च स्फुटं संगतिनिरूपणरमणीया, परिमिताक्षरा, विषयबहुला, परिमितप्रज्ञैरपि सुबोधा, अध्यात्मविद्यासौधमारुरुक्षूणां प्रथमसोपानायमाना च नास्तीति निर्भयं वदतामस्माकं नांशतोऽपि स्पृशति हृदयमतिशयोक्तिरिति, मन्यामहे, नियतं जानीयुरेव पुस्तकदर्शनेन सर्वेऽपि समचित्ताः। इयं च महामहिम्नां ज्ञानभक्तिवैराग्यतपःपरमधाम्नां संप्रति श्रीशृङ्गगिरिमठमात्मना परिष्कुर्वतां षड्दर्शनीनिष्णातानां जगद्गुरूणां श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिनाम् अतिप्रशस्तामाज्ञामनुसृत्यैव मुद्रापयितुमुपक्रान्ता। सुशुद्धाश्च प्राचीनाश्चानेके आदर्शा आनीता एतन्मुद्रणोपयोगितया। एतत्परिशोधनाय सर्वथापि सामीचीन्यसंपादनाय च ब्रह्मश्रीयुताः पण्डितवरेण्याः महीशूरसंस्थानधर्माधिकारिणः श्रीशृङ्गगिरिमठविद्वांसः

श्रीमन्तः रामशास्त्रिणः, मैलापुरीस्थगीर्वाणभाषामहापाठशालाप्रधानाध्यापकाः एम्. ए. परीक्षोत्तीर्णाः श्रीमन्तः कुप्पुस्वामिशास्त्रिणः, अभिनवभट्टबाणादिबिरुदशालिनः पण्डितकृष्णमाचार्याः, तञ्जानगरस्थाः पण्डितसुब्रह्मण्यशास्त्रिणश्च महान्तं प्रयासं धारयन्ति। तत्र तत्र संशयावसरे च श्रीमतां शृङ्गगिरिमठाधिपतीनां श्रीमहास्वामिनामादेशमनुरुध्य पाठयोजनादिकं क्रियते। इयं च अतिसमीचीनेषु दृढेषु पत्रेषु विशदविपुलैर्देवनागराक्षरैः कमनीयाकारेण मुद्रिता। अधिकरणसूच्यादिकं च योजितम्। आदौ च महती कापि भूमिका आङ्गलभाषया विलिखिता। तस्यां च श्रीसदाशिवब्रह्मेन्द्राणां जीवनचरितम्, सुप्रथितो महिमा, वृत्तेश्चास्या गौरवम्, अन्यान्यानि च ऐतिह्यतः श्रुतानि श्रीब्रह्मेन्द्राणामपदानानि निरूपितानि। अपदानानि च भूयसा श्रीशृङ्गगिरिस्वामिपादैराज्ञप्तानि निवेशितानि। अत्युत्तममुखबन्धसहितस्य सौवर्णाक्षरविराजमानस्य पुस्तकस्य मूल्यं रूप्यद्वयमेव। प्रापणभृतिः पृथक्। अचिरादाज्ञा दीयतां पुस्तकप्रेषणाय। परिमिता एव आदर्शा मुद्रिताः।

अध्यक्षाय,

श्रीवाणीविलासपुस्तकशालायाः

श्रीरङ्गे।



# देशवृत्तान्ताः ।

अद्वैतमतानुयायिषु सुप्रसिद्धेषु मठेषु 'शिवगङ्गामठः' इति कश्चिन्मठो महीशूरराज्ये समस्ति । तन्मठाधिपतयश्च गङ्गास्नानदिव्यक्षेत्रादिदर्शनेच्छया प्रस्थिताः, काश्यादिनगरं गत्वा प्रतिनिवृत्ताः, सेतुस्नानोद्देशेन दक्षिणं देशमागता मध्येपथमिमां त्रिशीर्षनगरीं निजानिवासेन व्यभूषयन् । तेषां, कामकोटिपीठाधिपतीनां शारदामठाधीश्वराणां च परस्परं समागमो जम्बुकेश्वरक्षेत्रे समघटत । यथोचितं यथासमुदाचारं च अन्योन्यं समभावयन् । श्रीरङ्गक्षेत्रे अत्र च उभयोरपि मठाधिपत्योर्वीथीप्रदक्षिणं श्रीरङ्गनाथस्य श्रीमातृभूतेश्वरस्य च दर्शनं च महता समारोहेण सममेव निरवर्ति । आस्तिकैः प्रार्थिताश्च शिवगङ्गामठाधिपतयः प्रमाणयुक्तिपुरःसरं निरर्गलया आन्ध्रवाण्या सर्वाभिनन्दितविषयविमर्शपूर्वकं भक्तियोगमेकस्मिन्दिने, कर्मयोगं द्वयोः, सदाचारं सनातनधर्मं चाधिकृत्य एकैकस्मिन् दिने समुपन्यास्थन् । युक्तिप्रदर्शनरीत्या च नव्यनागरका अपि तुष्टाः । भक्तिकर्मयोगोपन्यासदिनेषु च आध्यक्ष्यमातस्थुषां शारदामठाधिपतीनामुपक्रमोपसंहारप्रसङ्गश्च वाचा संकुचितोऽपि विषयतः सुबहुरभिनन्दनीयश्चासीत् । उभावपि तत्तद्योग्यतानुसारेण सर्वानपि विदुषः समर्बीभवताम् । उचितमिदम् ।

## बालेयम् ॥

बालेयाख्यमिदमौषधं अतिप्राचीनान्यपि अर्शांसि (मूलरोग) सर्वाणि कतिपयैरेवाहोभिः मूलाद्विनाशयति । अतिचिरन्तनं मलबन्धं बहुभिश्चिकित्साविशेषैरनुपशान्तमप्यपोहयति । बालेयमिदं रक्तमतिदुष्टमपि सम्यक् संशोधयति । अतश्चानेकान् त्वग्दोषान् (पामा दद्रु कुष्ठादीन्) संशमयति । दुष्टरक्तसमुत्पन्नश्च आमवातः (Rheumtism) प्रशममधिगच्छतीति अधुना कतिपयैः प्रयोगैरभिज्ञायते । अतिप्राचीनान् अर्शोरोगमलबन्धरक्तदोषान् एकस्याः कूपिकायां एव सेवनेन सम्यगुपशमयतीदं बालेयमित्यत्र न कोऽप्यस्ति संशयः । एकस्याः कूपिकाया मूल्यम्, सार्धं रूप्यकम्, (Rs. 1-8.) प्रापणव्ययः पृथक् ।

औषधान्यन्यान्यपि बहूनि सन्ति अस्मदौषधशालायामेव सज्जीकृतानि । व्याधीनां स्वरूपाणि सम्यक् सलक्षणनिदानमालिखद्भ्यः, तत्तद्रोगानुसारतो नितरां विचार्य अनुप्रेष्येरन् औषधान्यस्माभिः ।

पण्डित यम्. दुरैस्वामि अय्यङ्गार्यः ।

(Certificated) आयुर्वेदचिकित्सकः ।

तेप्पकुलम्; तिरिचिनापलि ॥

# Brahmasutra Vritti

BY THE FAMOUS

## SADASIVENDRA SARASWATI.

THIS is a very rare and precious work by one of the most revered personages whose name has become a household word in Southern India and whose Samadhi at Nerur is even now visited as a place of Pilgrimage by all. Sadasivendra Saraswati or Sadasiva Brahman as he is more familiarly known, was a great Sanyasin and was the author of several Vedantic works such as Upanishad Dipika, Atmavidyavilasa, Advaitarasamanjari, Bodharya, Siddhantakalpavalli, etc. His greatest work is this Vritti on the Brahmasutras known as **Brahma Tatvaprakasika** in which is clearly given the essence of the Bhashya of the great Sri Sankara Bhagavatpadacharya. At the command of His Holiness the present Sri Jagadguru of Sringeri we are bringing out a correct and good edition of all the works of Sadasivendra Saraswati and the Brahmasutra Vritti forms the first Volume of the same. A detailed English Introduction is added at the beginning of the volume giving in full all available information, whether historical or traditional, about the author. A list of the Adhikaranas and an alphabetical index of the Sutras add much to the usefulness of the book.

400 pages Cr. 8vo. Cloth bound: Gilt lettered. Price **Rs. 2.** only; Postage extra.

**N. B.** For specimen pages and further information see the Sanskrit Advertisement inside.

REGISTERED No. M. 103.


Vol. XIII. No. 8.

# The Sanskrit Journal

— OR —

# ॥ सहृदया ॥

संपादकः
र. कृष्णमाचार्यः, एम्. ए.

सहकारिसंपादकः
रा. च. वि. कृष्णमाचार्यः.

10-9-05

सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥



विषयाः ।



PUBLISHED
AT
PUDUKOTTA.

SRI. VANI VILAS PRESS.
— SRIRANGAM —
1909.

## सहृदया नियमाः ।



१. सहृदयाया द्वात्रिंशत्पृष्ठात्मिका एकैका संचिका प्रतिमासं प्रचार्येत । अस्यां च ललितपदघटिता अवश्यज्ञेयविषयभासुरा गद्यमयाः प्रबन्धा एव प्रायेण भवेयुः ।

२. उपन्यासलेखकैरपि महाशयैः सुस्पष्टमेकस्मिन्पत्रपृष्ठे मुद्रितग्रन्थरीत्या संधिविरामपुरःसरं विलिख्य प्रेषिता एव प्रबन्धाः सहृदयायामवकाशं लभेरन् ।

३. तत्तदुपन्यासप्रकाशनाप्रकाशनयोः, तत्र तत्र परिवर्तने वा पत्राधिपेच्छैव निष्पक्षपाता नियामिका ।

४. प्रेषिताः प्रबन्धा अप्रकाशिता दत्ते शुल्के परावर्त्येरन् । उत्तराकाङ्क्षिभिश्च शुल्कपत्रमवश्यं प्रेर्यम् ।

५. अधिकभागयोजनेऽपि वार्षिकं मूल्यं परं यथापुरं रूप्यत्रयमेव । प्रापणव्ययो न पृथक् । एकस्याः संचिकायास्तु आणकचतुष्टयं मूल्यम् । इङ्ग्लण्डादिषु तु अस्या मूल्यं नव षिल्लिङ्गाः ।

६. उपन्यासाः, पुस्तकानि च "सहकारिसंपादकः, सहृदया, कोत्तवाल्चावडि, तृच्चिनाप्पल्लि" इत्यत्र प्रेर्याणि । एतदन्यसमस्तकार्यार्थमपि लेखाः "मानेजर्. सहृदया आपीस्. पुदुकोट्टै" इत्यत्र प्रेषणीयाः ।

## विज्ञापनप्रकाशन नियमाः ।

१. संपूर्णस्य एकस्य पृष्ठस्य वार्षिकं प्रकटनमूल्यं चतुर्विंशती रूपिकाः । रू. २४.

२. प्रतिमासमेकस्याः पङ्क्तेः आणकद्वयम् । अणा. २.

३. चिरकालभाविनो विज्ञापनप्रकाशनस्य तु सौकर्यं क्रियेत । तच्च कार्यालयाद्विज्ञेयम् ।

॥ श्रीः ॥

# ॥ सहृदया ॥



कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि ॥

संपु. १.] कीलकवर्ष कार्तिकिकमासः । [सांचि. ८.

## चक्रवर्तिनक्षत्रमाला ।



सुप्रातं दिनमेतदद्य जगतः पुण्यं पुनः पाक्रिमं
जातः संप्रति देवतासमुदयः सर्वः प्रसादोन्मुखः ।
यत्सौराज्यसमृद्धिहृष्टहृदयैरस्माभिरात्तक्षमैः
श्रीमद्भारतचक्रवर्तिवचनव्याजात्सुधा पीयते ॥ १ ॥

पूर्वं भारतवर्षमेतदखिलं वीराग्रणीभिः प्रजा-
योगक्षेमसमुत्सुकत्रिकरणोदारैः कृपामेदुरैः ।
आशाचुम्बियशोभरप्रकटितक्षीरोदपूरोदरै-
र्भूपालैर्नलरामविक्रममुखै राजन्वदासीच्चिरम् ॥ २ ॥

किं ब्रूमः कथयामहे कथमिव स्वास्थ्यच्युतिर्भारते
संपन्ना समनन्तरं बत यया प्राची प्रसिद्धिर्गता ।
जिह्वा शुष्यति वाङ् न सर्पति मुहुर्बाष्पायते लोचन-
द्वन्द्वं यत्स्मरणेन हन्त विषमज्वालं ज्वलामस्तमाम् ॥ ३ ॥

भाषावेषमनःप्रवाहसमयाचारादिभिन्नाध्वभिः
स्वस्वोत्कर्षविशेषपोषकलुषस्वान्तैरसूयालुभिः ।
अन्योन्यप्रतिरोधबद्धहृदयैः कामार्थसेवापरै-
रन्याग्यैरपरापरैरवनिपैरासीदिदं व्याकुलम् ।। ४ ।।

शस्त्राशस्त्रिकृतोद्यमे प्रतिदिनं पारंपरीसंगतं
पन्थानं परिहृत्य कूटघटनाक्लिष्टाशये राजके ।
द्रव्यप्राणकलत्रपुत्रविषयेऽप्यत्याहिताशङ्किभिः
कष्टं भारतवासिभिश्चिरतरं तस्थे विषादाकुलैः ।। ५ ।।

चिन्ताभारनितान्ततान्तभिदुरस्वान्ते समस्ते जने
दुर्भिक्षे च निरन्तरायमभितः संचारमासेदुषि ।
दैवानुग्रहवैभवेन जनता 'मीस्टिण्डियाकम्पनी'
त्याख्यातामधि भारते विनयनव्यग्रामविन्दामहि ।। ६ ।।

इङ्ग्लण्डस्थितमन्त्रिमन्त्रपरिषद्दत्तावलम्बोद्धुरे
संघे श्रीमति भारतस्य भरणं निर्वोढुमुद्यच्छति ।
राजानः कलहान्निवृत्तमनसो जाताः प्रजानां हृदि
स्वास्थ्येनाङ्कुरितं क्रमेण शमितः संक्षोभकोलाहलः ।। ७ ।।

एष्वेव स्मरणीयकर्मसु दिनेष्वभ्युन्नतं भारतं
काङ्क्षन्तोऽत्र परिष्कृतीर्बहुतयीरातिष्ठिपन्नाङ्गलाः ।
पत्रप्रेषणगेहबाष्पशकटागाराणि तन्त्रीस्थला-
न्यन्यान्यानि च यत्फलानि परितो देशं परिष्कुर्वते ।। ८ ।।

प्राचीनेन विपक्त्रिमेण वचसां दूरेण दुष्कर्मणा
केचिन्नीचधियः शठप्रकृतयः स्वार्थस्पृहादूषिताः ।
अव्याजानधिराजमाहितमहाभक्तिव्रतान्सैनिका-
नन्याय्यं कलहायितुं कुसृतिभिः स्वीयाभिरासूत्रयन् ॥ ९ ॥

काले तत्र किलायुधीयविषमोन्मादस्फुरत्संकटे
कार्याकार्यविचारचारुधिषणैरुत्साहिता मन्त्रिभिः ।
विद्यानीतिविनीतिभिर्धनवती विक्टोरिया श्रीमती
दिष्ट्या भारतचक्रवर्तिपदवीं रेजे स्वसात्कुर्वती ॥ १० ॥

सर्वप्राणिहितैकतानहृदया विक्टोरियाख्या महा-
राज्ञी भारतभूमिभारमुररीचक्रे स्वयं सा यदा ।
शान्तिः कान्तिमशिश्रियत्समभवच्छर्मापि धर्माध्वनां
तुष्टिः पुष्टिमुपागमद्विरुरुचे नीतिर्निरीतिस्तदा ॥ ११ ॥

दुष्टाः केवलमात्मदौष्ट्यमजहुः शिष्टाः प्रमोदं ययु-
र्दुर्भिक्षं सपदि प्रशान्तमजनि स्वास्थ्यं प्रजानामभूत् ।
रामाराज्यमिदं समानविभवं श्रीरामराज्येन किं-
त्वाकारेण ततोऽधिकं विजयते विक्टोरियाधिष्ठितम् ॥ १२ ॥

स्वातन्त्र्यं किमिदं कथं नु तदिदं सम्यक्प्रयोक्ष्यामहे
किं वास्माकमितः फलिष्यति कथं कीदृक्तदित्यादिकम् ।
सर्वं विस्मरतां कुराजकदनक्लिष्टाशयानां चिरा-
दस्माकं दयमानया स्वयमहो राज्ञ्यैवमाशुश्रुवे ॥ १३ ॥

"अस्माकं प्रतिपत्तिरस्ति महती यद्भारतीया नृपाः
सर्वेऽपि प्रथयन्ति भक्तिविनयप्रेमाण्यनूनानि नः ।
तेषां गौरवपालनाय महतीं श्रद्धामुपादद्महे
सौराज्यस्य निदानमेवमुभयप्रेमेति जानीमहे ॥ १४ ॥

देवेनैव दयापरेण करयोर्नः पालनाय प्रजा
न्यक्षिप्यन्त किलेति नैव न वयं चित्तेऽनुसंदध्महे ।
तस्यैवास्ति समत्वबुद्धिरखिलेष्वस्माकमातो वयं
तुल्यामाङ्गलभारतीयजनयोर्दृष्टिं विधातास्महे ॥ १५ ॥

कामं नः स्वमताभिमानसरणिर्बहीयसी वर्तता-
मास्तां क्रैस्तवधर्मता नहि वयं द्विष्मः परेषां मतम् ।
अस्माकं विषये वसन्तु परितस्तत्तन्मतालम्बिनः
सुस्थाः सन्तु मतादिकर्मसु वयं नैव प्रवर्तामहे ॥ १६ ॥

विद्योत्कर्षमहाशयत्वमहिता राज्यादितन्त्रेष्वपि
प्रज्ञा भारतवासिनः समुचितामर्हन्ति चेदुन्नतिम् ।
तेभ्योऽप्याङ्गलतुल्यकक्ष्यमुचितं स्थानं प्रदायिष्यते
जातिर्नाधिकृतौ परं तदुचितार्हन्ती परीक्षिष्यते ॥ १७ ॥"

एवं भूतदयापरेण मनसा स्वीयप्रजाभ्यो मह-
त्स्वातन्त्र्यं स्वयमेव या पुनरदान्माता यथा वा पयः ।
सेयं स्वप्रतिमे प्रतापयशसी कृत्वा भुवि स्थेयसी
हा हा भाग्यविपर्ययेण जगतो धाम प्रपेदे स्थिरम् ॥१८॥

तादृक्षे समये कठोरविचरद्धारालकालानल-
ज्वालाजालसहोदरे बत परित्रस्ते समस्ते जने ।
दिष्ट्या भारतवर्षसंकलितया श्रीमान्कृपालुर्महान्
एड्वर्ट्सप्तम एष भारतधुरामात्मन्यथासञ्जयत् ॥ १९ ॥

लोकाराधनतत्परेण मनसा माता यथापालय-
त्सर्वाः स्वप्रकृतीस्तथैव वयमप्याशास्महे रक्षितुम् ।
इत्येवं दयमानमानसतया पट्टाभिषेकोत्सवे
प्रत्यज्ञास्त यदेष भारतमहाभाग्येन जिग्ये ततः ॥ २० ॥

धीरं वीरमुदारमेनममलप्रज्ञं प्रजापालन-
श्रद्धं बद्धदयं विनीतहृदयं संशेमहे राघवम् ।
यस्माद्विष्णुकलान्वितौ गणनया स्तः सप्तमौ द्वावपि
व्यावृत्तः प्रथमं द्वयोरपि यतः पट्टाभिषेकोत्सवः ॥ २१ ॥

तत्तादृग्गुणरत्नभूषितमहाराज्ञीप्रतिज्ञावचः-
पञ्चाशत्तमवर्षपूरणकृते संतन्वतामुत्सवम् ।
धृत्यै भारतवासिनां व्यवसितिं विज्ञाय तात्कालिकीम्
तेषामेष महीवृषा समदिशत्तोषादुदाराशयः ॥ २२ ॥

"माता नः स्वयमभ्युपागमदिदं राज्यं यदा वा ततो
नानाभेदयुतेषु भारतजनेष्वप्यैकमत्याप्तये ।
तत्तत्सान्नियमानुसारविधये दुष्कृत्यनिर्धूतयेऽ-
प्याप्तैर्मन्त्रिभिरात्मलाभविमुखैः सम्यग्व्यवासायि नः ॥

दैवीमापदमात्मना क्षपयितुं नैते वयं शक्नुमः
किंत्वेतच्छमनाय राजपुरुषाः कामं व्यवासासिषुः ।
प्रान्तीयः कलहोऽप्युपाशमि चिराच्छिल्पैः प्रपिप्ये मतैः
सर्वैरासि निराकुलैर्नृपतिभिर्व्यद्योति सद्गौरवैः ॥ २४ ॥

कामं कुत्सितवृत्तयः कतिपये वल्गन्तु दुश्चेष्टितै-
र्जानीमः खलु भारतीयजनतामस्मासु भक्त्याहिताम् ।
श्रद्दध्मोऽधिकृतिप्रदानविषये जात्यादिभेदं विना
स्वातन्त्र्यं च यथोचितं परमितोऽप्याशु प्रदीयेत वः ॥२५॥

योधैर्भारतवासिभिः सहजया भक्त्या पराचक्रमे
यद्युद्धेषु यदप्यदर्शि नचिरात्पुत्रे स्नुषायामपि ।
प्रेमास्मासु पुरेव भारतजनैस्तत्रोभयत्रापि न-
स्तोषं दर्शयितुं फलेन भगवद्दीक्षां प्रतीक्षामहे ॥ २६ ॥"

श्रीमन्भारतसार्वभौम तदिदं सत्यापय स्वां गिरं
भद्रं भद्रमसुद्रमाप्नुहि दृढारोग्यं चिरंजीविताम् ।
भूयो भूपतिभक्तिभारभरिताः सर्वे कृतज्ञाः स्म इ-
त्यस्माभिर्न निवेद्यमेतदधिपे भक्तिः स्वधर्मो हि नः ॥ २७ ॥

त्रिशीर्षपुरवास्तव्यः
कृष्णसूरिर्गुणान्विताम् ।
श्रीचक्रवर्तिनक्षत्र-
मालां ग्रथ्नाति सादरम् ॥



॥ श्रीः ॥

# सुभाषितानि ।

---

विष्णोर्मूर्तिषु धातुधीरपि गुरौ मर्त्यत्वसंभावना
सूरिष्वन्यसमत्वधीश्च किमुतान्येषु श्रुतौ हेलना ।
धिक्सांकेत्यमतिर्विधिष्वरिमतिर्याचत्सु नित्यत्वधी-
र्देहे प्राणमतिर्धनेऽखिलमिदं नृणां कलिक्रीडितम् ॥

सूरः प्राक्प्रथयति पद्मरागलक्ष्मीं
पद्मश्च स्फुटमिह सौरभावभासी ।
इत्येतौ मिथ उपनीतभावरागौ
प्रत्यूषे प्रणयगतिं प्रदर्शयेते ॥ २ ॥

निदधाति वसूत्करं सुहृद्य-
न्निजमिन्दुः कुमुदे विभिद्य कोशम् ।
तदपायभियेव जागरूकं
तदिदं निश्चयभिरक्षितुं सुहृत्त्वम् ॥ ३ ॥

निस्वस्य दीनवचनैर्नितरां न लुब्धे
विक्लेदशोषणविदाहलवोऽभ्युदेति ।
अध्यात्मशास्त्रगदितानत आत्मधर्मा-
नभ्येति याचकजनेष्वयमापतत्सु ॥ ४ ॥

वरदकृष्णमाचार्यः

# भारतखड्गाः ।

---

सुराधिपसुतेऽ मरारिगणवध करास्त्रसिद्ध्यै
चिराय विपिने पुरा तपस्यति दुरापतमत-
द्वरार्पणार्थं धराधरसुता पुराहितौ तौ
किराततनुभा सुरावनुसर च्छूराजवेषग-
पुराणभणिती वराहमिच्छा भराभ्युदीतं
त्वरातिशयव त्खुराग्रभिन्न स्थिरातलं कटु-
विरावमुच्चै स्तरामनुसृता वराजतां धुरि
शराभ्यां तयोः शरारुर्मृगः परासुरभव-
त्ततोऽत्र विषये तौ अधिचिक्षिपतु र्मिथो रुषोपेतौ ॥ ५० ॥

ततो मदस्त्र प्रतोदविषयी कृतो वराहः
कुतोऽत्रभवता बतोद्यमवता हतोऽयमिति तौ
धृतोरुकोपौ शतोर्ध्वसंख्यैः शितोग्रविशिखै-
र्हतो मिथः स्म क्षतोऽप्यथ रणे स्वतोऽभिमानी
सुतो मघवतः सतोयघनग र्जितो रुषा हुत-
घृतोऽनल इवो त्थितोऽयमन्तक जितो वराङ्गं
तुतोद धनुषा तुतोष तत्प्रह रतो नीललो-
हितोऽथ बुद्ध्वा स्तुतोऽमुना पदि नतोऽस्त्रमस्मै
दिदेश निजमतुलं स्वास्मिन् लीनं च गाण्डिवाद्यखिलम् ॥

# वररुचिः ।

'तथैव दद्याम्' इति प्रतिवदति तस्मिन् जाल्मे, सा मञ्जूषां श्रावयन्ती 'भो भो गृहदेवताः, शृणुतैतत् हिरण्यगुप्तस्य भाषितम्' इति व्याहार्षीत् ।

ततोऽभ्यङ्गमाचरन्वणिक् 'प्रभातप्राया रजनी । धूर्ताग्रेसर, गम्यतां स्वगृहम्' इत्यनिच्छन्नपि गलहस्तिकया चेटीभिर्निष्कासितश्चीरैकवसनो मषीलिप्तः पदे पदे श्वभिर्भक्ष्यमाणो लज्जमानो निजावासमयासीत् । नाशकच्च तां मषीं प्रक्षालयतो दासजनस्य संमुखमवस्थातुम् ।

अथ चेटीभिरनुगम्यमाना सतीमणिरुपकोशा नन्दभूपस्य प्रासादमभ्येत्य 'देव, हिरण्यगुप्तः श्रेष्ठी मद्भर्त्रा न्यासीकृतं धनं जिहीर्षति' इति व्यजिज्ञपत् । तेन च सद्य एवाकारितो वणिक् 'मद्धस्ते किंचिदप्येतदीयं द्रविणं नास्ति' इति सशपथमभाणीत् । तदानीमुपवर्षस्य दुहिता 'महाराज, मञ्जूषायां मद्भर्त्रा क्षिप्ता गृहदेवता एवात्र साक्षिण्यः । तासां पुरतोऽनेन स्ववाचा न्यासीकृतं धनमभ्युपगतम् । तद्विचार्यताम्' इत्यनार्थीत् । विस्मयाविष्टो राजा भटैस्तां मञ्जूषामानाय्य यावत्सभायामचिक्षिपत्; तावदुपकोशा 'भो देवताः, यदुक्तमनेनार्यवर्येण, तत्सत्यं वदत । यात च ततो निजं गृहम्' इति उच्चैराख्यत् । सदसि रहस्यनिर्भेदभिया नितरां कम्पमानास्ते 'सत्यं समक्षमस्माकमनेनाङ्गीकृतं धनम्' इत्यभाषिषत । ततो निरुत्तरेण वणिजा सर्वं न्यासीकृतं द्रविणमुररीकारि ।

अथ भूपेनाभ्यर्चिता प्रार्थिता च पतिव्रता मञ्जूषां सदस्युद्धाट्य, त्रीनपि तान्पुरुषाधमान् तमःपिण्डानिव बहिरनीनयत्। कृच्छ्राच्च ते मन्त्रिभिः प्रत्यभिज्ञाताः सर्वेषामुपहासास्पदतामगुः। किमेतदिति धार्मिकेण राज्ञानुयुक्ता साध्वी सा सर्वं यथावृत्तं सदस्यशिश्रवत्। 'अचिन्त्यं शीलगुप्तानां चरितं कुलयोषिताम्' इत्यभ्यनन्दिषुः सर्वे सभासदः। दुर्विनीताः परदारैषिणस्ते धूर्ताश्चत्वारोऽपि, क्रुद्धेन राज्ञा हृतसर्वस्वाः सनिकारं देशान्निर्वासिताश्चण्डालैरपि धिक्कृता जुगुप्सितान्प्राणानत्याक्षुः। उपकोशापि सत्कृता धार्मिकेण भूपेन, अनुमोदिता विदितवृत्तान्ताभ्यां वर्षोपवर्षाभ्याम्, अर्चिता च पौरैः पातिव्रत्यदेवतेति, भर्तारमेवानवरतं चिन्तयन्ती कृच्छ्राद्गृहाभ्यन्तर एवावर्तिष्ट।

गच्छता च कालेन तुषाराद्रौ तीव्रतरं तपश्चरन् वररुचिः, भूतनाथस्य प्रसादमुपलभ्य, सरहस्यं कृत्स्नं पाणिनीयं व्याकरणमधिजगे। शर्वनिदेशात्तदेव शास्त्रमनेन पूरितं संस्कृतं चाभूत्। एव निशाकरकलामौलिप्रसादामृतनिर्भरः, नवनवोन्मिषद्भारतीविलास उपकोशायाः पतिः, अज्ञाताध्वपरिश्रमः कतिपयैरेवाहोभिः पाटलीपुत्रं प्रति न्यवर्तिष्ट। जनन्या गुरुभ्यां चाभिनन्द्यमानागमनः, तच्चरणयोरभ्यवन्दिष्ट। अश्रौषीच्च तदद्भुतमुपकोशावृत्तान्तम्। अस्मेष्ट सुचिरम्। अमनिष्ट च गार्हस्थ्यस्य श्लाघ्यतां तादृक्षया धर्मपत्न्या।

अथ वररुचिमुखान्नवं शब्दशास्त्रं शुश्रूषमाणस्य वर्षस्य भगवता कार्तिकेयेनैव तदखिलं प्राकाशि। व्याडीन्द्रदत्तावपि वर्षोपाध्यायात्पाणिनीयादिकं शास्त्रमवेदिष्टाम्। अथ परितुष्टाभ्यां व्याडीन्द्रदत्ताभ्यां गुरुदक्षिणां प्रति विज्ञप्तो वर्षः, स्वर्णकोटिमवरिष्ट। तथेति प्रतिपद्य

मिथः संमन्त्र्य, तौ वररुचिमाहूयागादिष्टाम्— 'सखे, स्वर्णकोटिर्दक्षिणा परिकल्पिता अस्मदुपाध्यायेन । इयत्काञ्चनं नन्दभूपादन्यत्र लब्धुं न शक्यते । स हि नवाधिकनवतेः कोटीनामधिपः । प्रागेव तेन ते जाया धर्मभगिनीत्यादृता । अतोऽसौ त्वद्गुणैरवश्यमभ्यर्थितो दास्यत्येव । स हीदानीमयोध्यामधिवसति । एहि, तत्रैव गच्छामः' इति । ततस्त्रयोऽपि ते सब्रह्मचारिणः साकेतं अव्राजिषुः । हन्त प्राप्तमात्रेषु तेषु नन्दः परलोकमगात् । उदपादि च राष्ट्रे महान् क्षोभः ।

ततश्चिन्ताकुलेष्वितिकर्तव्यतामूढेषु तेषु योगसिद्धिमानिन्द्रदत्तोऽवोचत्— 'सुहृदौ, कश्चिदुपायोऽद्य मे प्रतिभाति । गतासोर्नन्दस्य शरीरमहं योगमहिम्ना प्रविशामि । वररुचिर्मामभ्येत्य काञ्चनं याचताम् । मत्प्रत्यागमनावधि मे शरीरमस्मिन् शून्ये देवकुले व्याडिना सुरक्षितं तिष्ठतु' इति । संजातहर्षावितरौ च तद्वचः साधु साध्वित्यन्वमोदिषाताम् ।

अथोत्क्रान्तजीविते नन्दे, सर्वतः समुद्भूते हाहाकारे, शकटालप्रमुखाः सचिवमुख्या अन्तःपुरं प्रविश्य, 'हा! हताः स्मः । हा! किमिदमापतितम् । अनाथाः संवृत्ताः स्मः । नन्द निखिललोकलोचनानन्द, त्वया विना गतमद्य जीवितनिबन्धनम् । गलिता धर्मसेतुः विधवा वसुन्धरा । निराश्रया विबुधाः । निरवलम्बा सरस्वती । निरुत्सवा लोकाः । उच्छृङ्खला दुर्मेधसः । अस्तमिता सत्कथा । जीर्णारण्यं जगत्' इत्याक्रन्दन्तं महिलाजनमाश्वास्य, विगतप्रभं राज्ञः शरीरं परिवार्य, अशोचिषुः । प्रधानसचिवः शकटालो विषादं सोढुमपारयन्, 'महाराज, किमेवमस्मानाकुलीकृत्य, तपसा समुपलब्धं बालकं चन्द्रगुप्तं द्विषतामाभिषीकृत्य, प्रणयवतीस्त्वदेकशरणा रमणी-

श्चाविगणय्य, लोकमिममहासीः ।' इति रुदन्नेव सुसूक्ष्मया दृष्ट्या नृपं निर्वर्णयन्, तदानने किंचिदिव स्मितमनुपश्यन्, किमेतदिति संभ्रान्तः, तस्योत्तमाङ्गमस्पृक्षत् । तदा सुप्तप्रबुद्ध इव नन्दः, चक्षुषी समुन्मील्य, 'किमर्थमयं कोलाहलः । नाहमुपरतः । जिजीविषामि वर्षशतम्' इति शनैः शनैराख्यत् ।

'प्रजानां पुण्येन प्राणिति नन्दः । केनापि सिद्धेन प्रत्युज्जीवितो महाराजः ।' इति सर्वतो हर्षनिर्भरेष्वनुचरेषु, प्रमोदोत्फुल्ललोचनेषु सचिवमण्डलेषु, आनन्दतुन्दिलहृदयेष्ववरोधजनेषु, प्रीतिविस्फारितनयनेष्वासन्नसेवकेषु, जयशब्दमुखरिताङ्गणेषु वन्दिलोकेषु, धन्वन्तरिप्रोक्तधातुविज्ञानप्रकारानुशिक्षणायासं निरर्थकं मन्वानेषु भिषक्समाजेषु, मङ्गलभेरीपटहध्वनिभिरापूर्यमाणेष्वाशामुखेषु, ससंभ्रमप्रधावितेन वेत्रपाणिना प्रतीहारिणा 'महाराज, पाटलीपुत्रादागतो वररुचिनामा कश्चिदखिलशास्त्रपारदृश्वा द्विजोत्तमो द्वारि तिष्ठति । दिदृक्षते च देवम्' इति विज्ञप्तो नन्दः शयनादुत्थाय, 'भद्र, अविलम्बमेनं प्रवेशय' इत्यादिक्षत् ।

ततः कञ्चुकिभिः 'इत इतो भगवन्' इत्यभ्यन्तरं नीतो वररुचिः 'महाराज, अहं कार्यार्थी समागतः । भवतः प्रत्युज्जीवनेन महानयमुत्सवश्चलति । गुरुदक्षिणार्थं सुवर्णकोटिं मे दापयास्मिन्नभ्युदये' इत्ययाचिष्ट । योगनन्दस्तथैवेत्युक्त्वा, शकटालं प्रधानसचिवम् 'देह्यस्मै सुवर्णकोटिम्' इत्याजिज्ञपत् ।

धीमानसौ सचिववरः 'देव दीयते' इत्युक्त्वा 'चित्रमिदम् । मृतोऽसौ पुनः प्राणिति । अर्थी चाद्यैव प्राप्तः । याचते च सुवर्ण-

कोटिम् । अविचार्यैव दीयतामित्याज्ञा ' इति संदिहानः, ' एवं न्विदम् ; एष योगनन्द एव, न सत्यनन्दः ' इति यथावृत्तमौहिष्ट । अममन्त्रत च हृदयेन— ' यथा तथा वा भवतु । नन्दस्य तनयो बालः । राज्यं च बहुशत्रुकम् । चारैरन्विष्य सर्वानपि शवान्दाहयेयम् । ततः सुचिरं प्राणिता असौ योगनन्दः ' इति ।

अथ शकटालस्याज्ञया देवालये सुरक्षितमिन्द्रदत्तकलेबरमप्यातैश्चारैः ' अब्रह्मण्यम् ' इत्याक्रोशन्तं व्याडिमवधूय प्रसभमदाहि ।

योगनन्देन च हेमकोटिसमर्पणे पुनः पुनर्नियुक्तो मन्त्री ' देव, सर्वोऽयं परिजनो महोत्सवाक्षिप्तचित्तः । मुहूर्तं प्रतीक्षतामेष विप्रः । यावद्दीयते ' इत्यभिलपन्, किंचिदिव व्यलम्बिष्ट ।

अथ क्षणादेव ' अब्रह्मण्यमब्रह्मण्यम् । योगस्थितो द्विजः उत्क्रान्तजीवित इति कृत्वा, अनाथशव इव तवाभ्युदये मामवधीर्य बलाद्दग्धो राजपुरुषैः ' इति योगनन्दमेत्य व्यलापीद्व्याडिः । तदाकर्णयन्नेव शकटालो वररुचये सुवर्णकोटिमदात् ।

अथ सशोको योगनन्दो विजने व्याडिमब्रवीत्— ' सखे, पङ्क्तिपावनानां सोमपीथिनां श्रोत्रियाणां वंशे समुत्पन्नोऽहमस्मिन्नेव जन्मनि शूद्रीभूतोऽस्मि । किं मे स्थिरयापि श्रिया ' इति । व्याडिस्तं सान्त्वयन्, कालोचितं प्राह—' शकटालेन ज्ञातोऽसि । महामतिर्मन्त्री ह्यसौ पूर्वनन्दसुते चन्द्रगुप्ते स्थिरानुरागः । कदाचित्त्वां विनाशयेत् । तदप्रमत्तः शुचं त्यक्त्वा वररुचिं प्रधानसचिवपदे निवेशय । अहमप्यद्यैव पाटलीपुत्रं गत्वा गुरुदक्षिणाप्रदानेन वर्षोपाध्यायस्य मनोरथं पूरयिष्यामि ' इति ।

तदनुरोधान्मन्त्रिपदे नियुक्तेन वररुचिना 'राज्यं नैव स्थिरं शकटाले पदस्थिते। तच्चिन्तयास्य विनाशम्' इत्येकान्ते विज्ञप्तो योगनन्दः, 'जीवन्योगस्थितो द्विजोऽनेन दाहित इति दोषं प्रख्याप्य, शकटालं सह पुत्रशतेनान्धकूपमवीविशत्। सपुत्रस्य तस्य देहयात्रायै अम्भसां सक्तूनां चैकः शरावोऽन्तर्बिलं प्रत्यहं न्यधायि।

एवमतर्कितोपनतामापदमनुचिन्तयता मन्त्रिणा 'पुत्रकाः, जलमिश्रमिदं सक्त्वन्नमेकस्यापि न पर्याप्तम्। अतोऽस्मासु योगनन्दस्य प्रतिक्रियां कर्तुं यः शक्तः, स एव अनेनाहारेण जीवतु' इति प्रोक्तास्ते 'तात, त्वमेव शक्तः; नास्माभिर्जीवद्भिः प्रयोजनम्' इति वदन्तः, पश्यत एव तस्य प्राणानहासिषुः। 'प्राणेभ्योऽपि हि धीराणां प्रिया शत्रुप्रतिक्रिया'।

सक्तुवारिभिरात्मानं वर्तयन् शकटालः, 'अबुद्ध्वा चित्तमप्राप्य विस्रम्भं प्रभविष्णुषु। न स्वेच्छं व्यवहर्तव्यमात्मनो भूतिमिच्छता॥' इति स्वकर्मानुशोचन्नेव, कथंकथमप्यजीवीत्।

योगनन्दोऽपि विस्मृतशकटालवृत्तान्तः, राज्ये बद्धमूलः, राजार्हेण वसनाभरणाहारादिना अस्तमितसत्त्वगुणो रजसाभिभूतः, पञ्चभिरप्यनेकसहस्रसंख्यैरिवेन्द्रियैरायास्यमानः, पार्थिवान्भोगानभुक्त। व्याडिस्तु दत्तगुरुदक्षिणः, तपसे वनं जिगमिषुः, योगनन्दमभ्येत्य स्वाशयमभाणीत्। स्मृतपूर्ववृत्तान्तो राजा 'मित्र, भागधेयेनोपनतेऽस्मिन्राष्ट्रे सहैव वसन् त्वमपि भोगान्भुङ्क्ष्व' इत्यवादीत्। विषयविषास्वादमुग्धमवगत्य नन्दशरीरगमिन्द्रदत्तं द्विगुणीकृतवैराग्यो व्याडिः, 'एवंप्रायेष्वसारेषु धीमान्को नाम मज्जति। न हि मोह-

यति प्राज्ञं लक्ष्मीर्मरुमरीचिका ॥' इति बोधयन् गजनिमीलितेनावधीरितो राज्ञा तपोवनमयासीत् ।

साचिव्यधुरां वहन्वररुचिः कालेन चतुरङ्गबलसमन्वितः सह भूपेन पाटलीपुत्रं प्रतिन्यवर्तिष्ट । तपस्तोषिताया जाह्नव्याः प्रसादादधिगतमहैश्वर्यः, अनाराधितप्रसन्नया शरीरिण्या सरस्वत्या चोपदिश्यमानराष्ट्रकार्यः, जनन्या गुरुभिश्च बहुमन्यमानः, परिचर्यमाणः पतिदैवतया सहधर्मचारिण्या, असक्त एव सुखान्यनुभवन्ननेष्ट बह्वीः समाः ।

मन्त्रिमुख्ये तस्मिन्निवेशितराष्ट्रभारो योगनन्दः, वित्तमदमत्तचित्तो दिवानिशमन्तःपुर एव वसन्, इन्द्रियार्थपरिशून्यमेकमपि क्षणान्तरं सोढुमक्षमः, सुदूरं मूढमात्मानं नाज्ञासीत् । तदवस्थं तमवलोक्य निर्विण्णो वररुचिः "अहो! दुर्निवारता भवितव्यतायाः । क्व स सर्वशास्त्रपारगः प्रतिभानवान् शमदमादिगुणाधिष्ठानमिन्द्रदत्तः, क्वासावुपभोगरुचिर्व्यपगतविवेको गजेन्द्र इव मत्तो योगनन्दः । 'अकाण्डपातोपनता कं न लक्ष्मीर्विमोहयेत्' इत्यस्य प्रथमोदाहरणमेष राजा विशृङ्खलश्चरति । तत्कार्यचिन्तया आक्रान्तस्य मे स्वधर्मोऽवसीदति । अतोऽन्धकूपनिक्षिप्तं तं शकटालमुद्धृत्य राष्ट्रकार्यावेक्षणे सहायं करोमि" इति निश्चित्य राजानं विज्ञाप्य तं महामतिं साचिव्ये न्ययुक्त । सोऽपि 'स्थिते वररुचौ दुर्जयो योगनन्दः' इत्यवगत्य रन्ध्रान्वेषी भूत्वा वैतसीं वृत्तिमाश्रित्य राज्यकार्याणि यथापूर्वं निरवाक्षीत् ।

एकदा नरपतिः सह वररुचिना भागीरथीतीरोपवने चरन्, यदृच्छया गङ्गामध्ये श्लिष्यत्पञ्चाङ्गुलिं हस्तमालोकिष्ट । किमेतदिति

तेनानुयुक्तो मन्त्री द्वे निजाङ्गुली तस्यामेव दिश्यदीदृशत् । तत्क्षणादेव तिरोभूते हस्ते नितरां विस्मितेन राज्ञा पृष्टो वररुचिः, 'पञ्चभिर्मिलितैः किं यज्जगतीह न साध्यते' इति शंसते हस्ताय 'ऐकचित्त्ये द्वयोरेव किमसाध्यं भवेत्' इति द्वे अङ्गुली दर्शिते मया इति गूढविज्ञानमवादीत् । तस्य निरुपमं मतिवैशद्यं वीक्ष्य व्यषदच्छकटालः ।

कदाचिद्यामिनीषु नगरावेक्षणे नियुक्तो रक्षिणामधिपोऽर्धरात्रे भ्रमन् एकैको रात्रौ रात्रौ क्षयं प्रापत् । तच्छ्रुत्वा नन्देन वररुचिरेव तत्कार्यावेक्षणे न्ययोजि । सोऽपि निशीथे पर्यटन्नभिमुखमायान्तं कंचिद्राक्षसमद्राक्षीत् । अप्राक्षीच्च 'किं तव समीहितम्' इति । स तु 'ब्रूहि, नगरेऽत्र का सुरूपा स्त्री' इति प्रश्नमदात् । तेन च विहस्य 'या यस्याभिमता मूर्ख सुरूपा तस्य सा भवेत्' इत्यवादि । परितुष्टो राक्षसः 'जितोऽस्मि । इतः प्रभृति सुहृदस्तव स्मरणमात्रकृतसंनिधानो भवेयम्' इत्युक्त्वा अदर्शनमगात् ।

एवं जागरूकेण वररुचिना अवेक्षितेषु राज्यकार्येषु, निशान्ते वसन्नभिषङ्गजडो भूपः, वातायनाग्रादुन्मुखं कंचिद्ब्राह्मणं निरीक्षमाणां महिषीं दृष्ट्वा, विवेकपरिपन्थिन्या ईर्ष्यया कलुषितस्वान्तः क्रुद्धस्तस्य विप्रस्य वधमादिक्षत् । राजाज्ञया वध्यभूमिं नीयमाने द्विजे, विपणिमध्ये गतजीवोऽपि मत्स्य उच्चैरहसीत् ।

तद्बुद्ध्वा नरपतिर्विप्रस्य वधं निवार्य 'मत्स्यहासस्य कारणं निरूप्य कथ्यताम्' इति वररुचिमनाथीत् । अथ चिन्तितोपस्थिता वाग्देवी कात्यायनमब्रवीत्— 'वत्स, अस्य बालतरोरधस्तादलक्षित-

स्तिष्ठ रात्रौ । श्रोष्यसि मत्स्यस्य हासहेतुम्' इति । तथैव तत्र स्थित एष मन्त्री बालैः पुत्रैस्तत्र निवासायागतां राक्षसीं घोरामैक्षिष्ट । भक्ष्यं याचमानान्पुत्रान्मूर्ध्न्युपाघ्राय सा निशाचरी 'प्रातर्वो विप्रमांसानि दास्यामि । अद्य न स हतः' इत्याश्वासयन्ती, 'किमर्थमसावद्य न घातितः' इति तैः पृष्टा 'वध्यभूमिं नीयमाने तस्मिन् मृतोऽपि मत्स्योऽहसीत्' इत्युदीरयन्ती, पुनश्च 'हासकारणं वद' इत्यनुयुक्ता 'पुत्रकाः अन्तःपुरे सर्वा अपि राजस्त्रियो भ्रष्टचारित्राः । सर्वतस्तत्र स्त्रीवेषधारिणः पुरुषा गूढं चरन्ति । एतदविज्ञाय निरपराधो ब्राह्मणो हन्यतेऽनेन जाल्मेनाभिषङ्गजडेनेत्यहसत्तिमिः' इत्यभाषिष्ट । तदवगत्य वररुचिः प्रातर्योगनन्दायाख्यत् । सोऽपि तान् स्त्रीवेषधारिणः पुरुषानन्विष्यावधीत् ।

एवमुच्छृङ्खले राजनि, निन्दति च तादृशस्य सेवां वररुचौ, कश्चित्समर्थश्चित्रकरः आस्थानमण्टपमागतो योगनन्दस्य महादेव्याश्च प्रतिकृतिमलेखीत् । अलब्ध च प्रभूतं द्रविणं परितुष्टाद्भूपतेः । एकदा राजानं द्रष्टुमभ्यन्तरं प्रविष्टो वररुचिः, कुत्रचित्तदालेख्यमालोक्य संपूर्णलक्षणाया देव्याश्चित्रगताया लक्षणान्तरसंबन्धमभ्यूह्य, वर्तिकया तस्या मेखलापदे तिलकमलिखत् । तं च तिलकमन्येद्युर्योगनन्दो निरूप्य, 'कात्यायनेन दत्तः' इति विज्ञाय, प्रमुग्धः 'असंशयमसौ चारित्राद्भ्रष्टः । ममान्तःपुरविप्लवं कुरुते । अत एवानेन स्त्रीवेषधारिणः पुरुषाः ज्ञाताः' इति निश्चित्य, क्रुधा ज्वलन्, 'वररुचिरसौ दुर्वृत्तो हन्यताम्' इति शकटालमाजिज्ञपत् । स तु महामतिः 'दिव्यबुद्धिप्रभावोऽसौ । ममापदः समुद्धर्ता । नैनं हन्तुं सुरासुरैरपि शक्यते, किं पुनर्मानुषैः' इति मनसा चिन्तयन्, वर-

रुचिं स्वावसथे निगूढं वासयित्वा 'महाराज, तवाज्ञा निर्व्यूढा' इति योगनन्दममूमुदत्।

अथ गणरात्रापगमे, योगनन्दस्य महादेव्यामुत्पन्नो हिरण्यगुप्तनामा कुमारोऽष्टादशवर्षदेशीयो निवार्यमणोऽपि पित्रा, अननुमोदितोऽपि जनन्या, मृगयाक्षिप्तचित्तस्तुरङ्गममारुह्य कतिपयाप्तपुरुषैरन्वितो महावनमगाहिष्ट। अनुधावंश्च कंचिद्वनवराहमेकाकी सुदूरमपाक्रमीत्। अक्षैषीच्च वासरः। गाढान्धतमसे घोरं वाशतां शरारूणां गर्जनश्रवणेनैव परित्रस्तो राजपुत्रः कंचिन्महावनस्पतिमारुक्षत्।

ततः क्षणादेव अनुद्रवतः सिंहादात्मानं रक्षता भल्लूकेन स एव पादप आरोहि। अन्तिकमागतं तं वीक्ष्य भयेन वेपमानगात्रं हिरण्यगुप्तमङ्के कुर्वन् ऋक्षः 'मित्र, मा भैषीः' इति मनुष्यवाचा व्याहार्षीत्।

अथाङ्के विस्रब्धसुप्तं तं भल्लूकः प्रार्थितोऽपि केसरिणा भुवि निक्षेप्तुं नैवैषीत्। अनन्तरं च प्रबुद्धस्य राजकुमारस्याङ्कमुपधायाशयिष्ट। हर्यक्षेण प्रलोभितो हिरण्यगुप्तस्तं भल्लूकं निर्दयो भुव्यक्षैप्सीत्। दैवप्रबोधितोऽसौ शरारुः पातितोऽपि नापप्तत्। अशप्त च तं क्रोधेन—'मित्रद्रोहिन्, एतस्य क्रूरकर्मणो बहिःप्रकाशावधि उन्मत्तो भव' इति। प्रातः प्रासादमागतमुन्मत्तं कुमारमभिवीक्ष्य विषण्णो भूपः स्वस्थीकरणोपायमपश्यन्, 'यदि जीवेद्वररुचिरस्मिन्काले, उन्मादहेतुर्ज्ञायेत। धिङ्मे तद्वधलाघवम्' इत्यात्मानमजुगुप्सिष्ट। निकटवर्ती शकटालः 'हन्त, लब्धः समयो वररुचेः प्रकाशने' इति विचिन्त्य, अवनिपेन तेन दत्ताभयः 'देव, ध्रियते महामतिर्वररुचिरेष मद्गृहे निगूढम्' इति

विज्ञाप्य, तन्निर्देशनानुपदमेव सकृच्छ्रुतधरं बहिरनीनयत् । आगत मात्र एव कुमारस्योन्मादकारणं पृष्टो योगनन्देन कात्यायनः, कुमारमभिवीक्ष्य 'कृतोऽनेन मित्रद्रोहः । तस्य फलमिदमनुभूयते' इति सरस्वतीप्रसादेनाभाणीत् । सद्यः स्वस्थेन हिरण्यगुप्तेन विजनेऽरण्ये भूतपूर्वो वृत्तान्तः साकल्येनाभ्यवर्णि । विस्मितेन राज्ञा 'अङ्ग, कथमिदं त्वया ज्ञातम्' इति पृष्टो वररुचिः 'देव, लक्षणैरनुमानतः प्रतिभातश्च प्रज्ञावतां धियः सर्वमकथितमेवावगच्छन्ति; यथा मया तिलकः पुरा ज्ञातः' इत्यगादीत् । लज्जानुतापवता जोषंभावमुपगतेन योगनन्देनानारचितसत्कारः, लब्धया चारित्रशुद्ध्यैव कृतकृत्यमात्मानं मन्यमान उपकोशापतिः, विरक्तः 'अलं नश्वरादपि नश्वरेण राजप्रसादेन' इति चिन्तयन्स्वगेहमगात् ।

जामातरमागतं दृष्ट्वा समुद्भ्रान्तचेतन उपवर्षः 'विद्वन्, तव वधदण्डं श्रुत्वा पतिव्रता मे दुहिता शोकेन दग्धा अविरलाश्रुधारापरिप्लुतलोचना निवार्यमाणापि मया ज्वलनं प्राविक्षत् । जराजर्जरितावयवायास्ते जनन्याः 'हा कात्यायन, हा सकृच्छ्रुतधर' इत्यनवरतं विलपन्त्या हृदयं स्वयमेवास्फुटत्' इत्युच्चैः प्रारुदत् ।

आकर्ण्येदमुपकोशापतिः, अभिनवोद्भूतशोकावेगविचेतनश्छिन्नमूल इव द्रुमो भूमावपतत् । व्यलापीच्च सुचिरम् । 'प्रियबन्धुविनाशोत्थः शोकाग्निः कं न तापयेत् ।'

अथ तदवस्थं वररुचिमुपश्रुत्य वर्षोपाध्यायः सत्वरमेत्यावादीत्—"वत्स, सकृच्छ्रुतधर, किमेवं प्राकृत इव, अनधिगतधर्मसूक्ष्म इव, अविद्वानिव, अनिरूपितलोकवृत्तान्त इव, विषादवशमापन्न-

मात्मानं न रुणत्सि । सत्यं जन्मनः प्रभृत्यानास्वादितशोकरसस्त्वम् । इदमपि नाम ते वैराग्यदृढीकरणाय त्वद्भक्तिसमाराधितेन दैवेनाकलितम् । तदवलम्ब्यतां धैर्यम् । संस्तभ्यतामात्मा । विचार्यतां लोकतत्त्वम् । 'आसंसारं जगत्यस्मिन्नेका नित्या ह्यनित्यता । तदेतामैश्वरीं मायां किं जानन्नपि मुह्यसि" इति ।

एवं प्रबोधितो वाक्यकारः, विषादमवधूय विरक्तहृदयः परित्यक्तसर्वनिबन्धनः प्रशमैकसहायस्तपोवनमशिश्रियत् ।

अथ गच्छत्सु दिवसेषु, कृतपुण्यारण्यवसतिर्वररुचिः, यदृच्छया मगधेभ्यः समायातं विप्रं योगनन्दवार्तामप्राक्षीत् । सोऽप्येनं प्रत्यभिज्ञाय कृतवन्दनः प्राह— "महामते, त्वयि तपोवनं गते, लब्धावकाशः कृतवैरः शकटालो योगनन्दस्य वधोपायं चिन्तयन्, क्षितिं खनन्तं चाणक्याख्यं द्विजमैक्षिष्ट । 'किमर्थं खनसि' इति पृष्टो मन्त्रिणा 'अनेन दर्भेण क्षतो मे पादः । तमेनमनुन्मूल्य नापसरेयम्' इत्यब्रवीत् । 'क्रूरनिश्चयेनानेन सहायभूतेन सिद्धप्रायो मे मनोरथः' इति निश्चित्य शकटालस्तं संमान्य, स्वगृह एव वासयित्वा नन्दभूपस्य प्रासादे सुवर्णलक्षदक्षिणाके त्रयोदशीश्राद्धे तं निमन्त्रितानां धुरि न्ययुक्त । परं तदेव स्थानं राज्ञः प्रत्ययितः सुबन्धुनामा ब्राह्मणोऽप्यभ्यलाषीत् । नन्देन पूर्वनियुक्तोऽपि चाणक्यः प्रसभमग्रासनादद्रावि ।

अथ कोपेन प्रज्वलंश्चाणक्यः शिखां मुक्त्वा, 'सप्तभिर्दिवसैरेनं दुर्विनीतमैश्वर्यमत्तं नृपं विनाश्य बध्नाम्येतां शिखाम्' इति प्रतिज्ञामकार्षीत् । तं चाणक्यं निजसदने गूढं स्थापयित्वा तदपेक्षितं सर्व-

मप्युपकरणमदाच्छकटालः । सोऽप्यतिकोपनो विप्रः, उग्रैरथर्वमन्त्रैः कृत्यामसीषधत् । तया ग्रस्तो योगनन्दः, तीव्रेण दाहज्वरेणाभितप्तः सप्तमे दिवसे पञ्चत्वमुपागमत् । शकटालः सद्य एव हिरण्यगुप्तं निहत्य, पूर्वनन्दसुतं चन्द्रगुप्तं राज्येऽभिषिच्य, चाणक्यं च मन्त्रिपदे निवेश्य, कृतप्रतिक्रियः पुत्रशोकेन निर्विण्णो महावनमगात्" इति ।

एवमतिशोचनीयं योगनन्दस्योदन्तमाकर्ण्य नितरां खिन्नो वररुचिः, संसारमसारं बुद्ध्वा, उपास्य विन्ध्यवासिनीम्, तदाज्ञया व्याघ्रवानरसंकीर्णे गहने विन्ध्यकान्तारे परिभ्रमन् कुत्रचित्प्रांशुं न्यग्रोधतरुमालोकिष्ट । वनस्पतिं समया पिशाचानां शतैर्वृतं काणभूतिं नाम वेतालं प्रेक्ष्य, सद्य एवानुस्मृतपूर्वजन्मवृत्तान्तः, तं च काणभूतिम् 'धनदशापेन पिशाचीभूतः सुप्रतीकनामा पुष्पदन्तस्यात्मनः सुहृद्गुह्यकः' इति प्रत्यभिज्ञाय, दर्शितसौहार्दः, तस्मै विद्याधरचरितमुपवर्ण्य 'सखे, अचिरादत्रागमिष्यते गुणाढ्याय इमामपूर्वां कथां कथय । ततस्ते मोक्षो भविता' इति तं बोधयित्वा देहमोक्षाय पुण्यं बदरिकाश्रमं प्रास्थित ।

विचरंश्च हिमालयोपान्तवनेषु कन्दमूलफलादिभिरात्मानं वर्तयन्तम् 'शाकरसः' इत्यन्वर्थनामानं मुनिमैक्षिष्ट । तेनातिथ्येनोपचरितः, तज्ज्ञानपरीचिक्षिषया दर्भक्षतात्तस्य पाणितलात्प्रस्रवन्तीमसृग्धारां शाकरसत्वेन परिणतामकार्षीत् । सोऽपि तद्दृष्ट्वा 'सिद्धोऽस्मि' इति दृप्तोऽभूत् । तदा वररुचिः, तामहंकृतिं ज्ञानपरिपन्थिनीं तस्मै प्रदर्श्य 'जिज्ञासनाय रक्तं ते मया शाकरसीकृतम् । यावन्नाद्याप्यहंकारः परित्यक्तस्त्वया मुने ॥ ज्ञानमार्गे ह्यहंकारः परिघो दुरतिक्रमः । ज्ञानं

विना च नास्त्येव मोक्षो व्रतशतैरपि ॥ स्वर्गस्तु न मुमुक्षूणां क्षयी चित्तं विलोभयेत् । तस्मादहंकृतित्यागात् ज्ञाने यत्नं मुने कुरु ॥' इति मोक्षरहस्यमुपदिश्य, कृतस्तुतिस्तेन प्रणतेन, बदर्याश्रमोद्देशमयासीत् ।

तत्र च निराहारः, निरन्तरभक्तिभरितः, निर्गतजीविताभिमानः, निरहंकृतिः, नितान्तनियमशोषितकरणग्रामः, निदिध्यासितभवानीचरणः, निबिडतरतपःसमाराधितगिरिजाप्रसादः, निबद्धानलधारणानिर्दग्धकलेबरः, नीलकण्ठाभिनन्दितनिजागमनः, दिव्यां गतिमभाक्षीत् ।

## आरोग्यप्रकाशिका ॥

### वार्षिकोदकस्य भेदाः गुणाश्च ।

अथ वार्षिकमुदकमिदं भवति द्विविधम्— दिव्यं भौमं चेति । तत्र दिव्यं नाम वसुधातलसंश्लेषरहितं प्रायः सुनिर्मलं सलिलम् ; अन्यत् भौमम् । दिव्यं नामेदमेव 'आन्तरिक्षम्' इति वैद्यकैर्व्यवह्रियते । इदं च आन्तरिक्षम् 'धारम्' 'कारकम्' 'तौषारम्' 'हैमम्' इति चतुर्धा सुश्रुतादिभिर्व्यभज्यत ।

तत्र धारम् "धाराभिः पतितं तोयं गृहीतं स्फीतवाससा । शिलायां सौधभागे वा धौते हि पतितं च तत् । सौवर्णे राजते ताम्रे स्फाटिके काचनिर्मिते । भाजने मृण्मये वापि स्थापितं धारमुच्यते । धारं नीरं त्रिदोषघ्नमनिर्देश्यरसं लघु । सौम्यं रसायनं बल्यं तर्पणं

ह्लादि जीवनम् " इत्यादिभिर्गुणतो निरूपितम् । इदं च धारं पुनः 'गाङ्गम्' 'सामुद्रम्' चेति द्विविधम् । गङ्गाम्भस इव पारिशुद्ध्यमाधुर्याद्युत्तमगुणबाहुल्यात् अस्य 'गाङ्गम्' इति, सागरोदकस्येव विविधक्षारादिदोषभूयिष्ठत्वात् अपेयत्वाच्च अपरस्य 'सामुद्रम्' इति च शास्त्रज्ञैः व्यवहारः क्रियते । अनयोरुभयोरपि परीक्षाप्रकारमप्येकं वाग्भटः प्राह— 'येनाभिवृष्टममलं शाल्यन्नं राजतस्थितम् । अक्लिन्नमविवर्णं च तत्पेयं गाङ्गमन्यथा । सामुद्रं तन्न पातव्यम्' इति । प्रायश्च प्रावृषि दिवसेष्वन्तिमेष्वेव वर्षति गाङ्गम्, अन्यदा हि भूयसा सामुद्रमेव घनः । तथा च सुश्रुतः—'तत्र गाङ्गमाश्वयुजे मासि प्रायशो वर्षति....गाङ्गं पुनः प्रधानं तदुपाददीताश्वयुजे मासि शुचिशुक्लवितपटैकदेशच्युतम्....' इत्येवमादिभिः । एवं संभृतस्य पश्चात्किंचिदभिसंस्कृतस्य खलु गाङ्गस्य 'हंसोदकम्' इति आयुर्वैदिकं पारिभाषिकं नाम । तल्लक्षणं चाह चरकः—'दिवा सूर्यांशुसंतप्तं निशि चन्द्रांशुशीतलम् । कालेन पक्वं निर्दोषमगस्त्येनाविषीकृतम् । हंसोदकमिति ख्यातं शारदं विमलं शुचि । स्नानपानावगाहेषु शस्यते तद्यथामृतम् ॥' इति । हंसोपभोग्यत्वात् हंसवदतिविमलस्वरूपत्वाच्च अस्य 'हंसोदकम्' इति नामेति आयुर्वेदविदो वदन्ति । कारकस्य तथा हैमस्य च स्वरूपं प्रागेवाभ्यधायि ।

सरितां समुद्राणां वा पर्यन्तेषु बाष्पीभूतमम्भः किल किंचिन्मेघात्मना परिणतिमप्राप्तं सदेव उर्व्या उपरि नातिदूर एव नक्तमधिगत्य शैत्यं तदनु तत्रैव तौषारं भावमनुप्रपद्य धूमवदभिवर्षति । अस्यैव भवति संज्ञा 'तौषारम्' इति । तथा हि—'अपि नद्याः समुद्रान्ते वह्निरापस्तदुद्भवाः । धूमावयवनिर्मुक्तास्तौषाराख्यास्तु ताः स्मृताः ।

अपथ्याः प्राणिनां प्रायो भूरुहाणां तु नाहिताः । ' इत्यायुर्वेदे ।

यतश्च नाभसं (Atmosphere) नैर्मल्यमथवा मालिन्यमभ्रातपरिभ्रश्यत्, अम्भः किल स्वयमप्यनुबध्नाति ; ततः प्रावृषि पश्चिमायामेव प्रायो वर्षोदकप्लावितसकलमलादन्तरिक्षात् निपतत् धारं नीरमेव ननु सर्वेषां पानाय स्नानाय च नितरां प्रशस्यतेतरामिति फलितम् ।

अर्णवाभ्यर्णेषु अभिवृष्टान्यम्भांसि किल विविधक्षारसत्त्वैः (Chlorides) गन्धकसत्त्वैः (Sulphates) अन्यैश्च बहुभिः पदार्थपरमाणुभिः सन्ति नितान्तं संदुष्टानि । संगच्छन्ते च सलिलेष्वेषु आकाशान्निष्पतत्सु, अभितश्चाभिव्याप्ता वायवीयाः (Gases) पृथग्विधाः पदार्थाः । तत्र च सन्ति प्राणवायोरंशाः चतुस्त्रिंशत् । (O. 34%) लवणवायोस्तु चतुष्षष्टिः, (N 64%) द्वौ च इङ्गालाम्लावायोः ($CO_2$ 2%) । अन्ये च नवसारवाय्वादयः ($NH_3$) कतिचन पदार्थाः परमल्पीयसा प्रमाणेनास्मिन् स्युः प्रलीताः । अपराणि च कानिचिदतिलघिष्ठत्वात् वियति विप्लवमानानि चेतनान्यचेतनानि च (Organic & Inorganic substances) वस्तुजातानि अस्मिन् आसजेयुः । प्रस्थदशकोन्मितानि धाराणि वारीणि भुव्यभिपतनात्पूर्वं विहायसो विन्दन्ति सार्धरक्तिकाद्वयपरिमितान् ($2\frac{1}{2}$ Grains) कतिचन मूर्तान् पदार्थान् । यान्त्रिकादिविविधव्यापारस्थलेषु वर्षोदकेषु (धारेषु) अतोऽप्यतिशेरते नितरामिमानि मलीमसानि द्रव्याणि । तानि च खल्वमूनि— गन्धकाम्लसामुद्रलवणाम्लादीनि (Sulphuric acid, Hydrochloric acid etc. ), इङ्गालादिविविधेन्धनदहनसमुद्भूतानि नैकविधानि वायवीयानि मूर्तानि वा पदार्थजातानीत्येवमादीनि ।

(क्रमशः)

उत्पन्नमात्र एव च कार्यान्तरनियन्त्रितोऽप्यननुपालितपरस्परः प्रकटितसंभ्रमः पूर्णपात्रग्रहणाय भूमिपालाभिमुखमचलत् सकञ्चुकिकिरातकुब्जक्षुल्लमूकवामनोऽनेकशतसंख्यः शुद्धान्तवारस्त्रीजनः । प्रमुदितपौरजनजयजयारावपीवरः, आदिशन्निव रङ्गवल्लीयोग्यरत्नानयनाय पृथ्वीतलोपान्तेषु पाथोनिधीन्, बभ्राम मथनभ्रान्तमन्दरविघूर्णितमहार्णवध्वानघर्घरो जगति नान्दीघोषः । प्रसर्पन्नितस्ततः प्रस्तुतपरीहास इव तत्कालमधिगतविकासासु प्रमुदितास्विव दिक्षु चिक्षेप पिष्टातकपिञ्जरं सरोजकिञ्जल्कजालमुद्यानानिलः । प्रचलितारुणपाणिपल्लवम्, आन्दोलितालिनीलालकभङ्गम्, आभङ्गुरमुरोजस्तबकभारेण, रणरणिततारत्नाभरणमालम्, अनिलाहतकल्पलतावनमिव ननर्त सान्तःपुरं नगरनारीवृन्दम् ॥

अवनीश्वरोऽपि परमोत्पन्ननिर्वृतिः जलकटाहक्रोडनिक्षिप्तनाडिकानिहितचक्षुषा गणकनिवहेन निश्चित्य देव्याः प्रसवलग्नमागतेन मुहुर्मुहुरनेकप्रकारैः कृतोपवर्णनमाकर्ण्य जन्मग्रहबलं बालकस्य, कृतमज्जनादिकृत्यः, शुभे मुहूर्ते निवर्तितानुचरलोकः, परिगतप्रान्तमुत्खातखड्गैः समन्ततो वीरपुरुषैः, प्रशस्ततरुपल्लवास्तृतमुखेन द्वारशाखासङ्गिना मङ्गलकलशयुगलेनावभासितम्, साशीर्वादमन्तःप्रकीर्णकुसुमाक्षतकणाभिर्बन्धुवृद्धाभिराबद्धमङ्गलगीतकोलाहलम्, अदत्तबाह्यपरिजनप्रवेशेन प्रशस्तालापिना सकललौकिकाचारकुशलेन 'कुरुत हरिचन्दनोपलेपहारि मन्दिराङ्गणम्, दत्त द्वारि नूतनं चूतपल्लवदाम, कारयत सर्वतः शान्तिसलिलक्षेपमकृतकालक्षेपम्,

---

**उत्पन्नेति** । पूर्णपात्रम्— 'हर्षादुत्सवकाले यदलंकाराम्बरादिकम् । आकृष्य गृह्यते पूर्णपात्रं पूर्णानकं च तत् ।'

आहरत भगवतीं षष्ठीदेवीम्, निधत्त पर्यन्तेषु शयनस्य सद्योऽभिमन्त्रितां रक्षाभूतिरेखाम्' इत्यादि जल्पता तल्पनिकटोपविष्टेन शुद्धान्तजरतीजनेन क्रियमाणविविधशिशुरक्षाविधानम्, अधिकोदञ्चितात्मभिरचञ्चलावस्थानैरुत्थाय विस्मितैरिव त्रिभुवनातिशायिशोभमर्भकरूपमवलोकयद्भिर्मङ्गलप्रदीपैः प्रकाशिताभ्यन्तरं प्रियायाः प्रसूतिगृहमविक्षत् ॥

प्रविश्य च सतर्षमुद्भूतप्रहर्षस्मितो विस्मयस्तिमितपक्ष्मणा लोचनयुगेन स्फुटविभाव्यमानसकलचक्रवर्तिलक्षणां प्रतिक्षणमवलोक्य सूनोस्त्रिभुवनविलक्षणामवयवश्रियम्, अमन्दनिर्गतानन्दाश्रुबिन्दुरप्रतिपादनीयां सुखमयीं कामपि दशां प्राप। निर्गत्य च विमोचिताशेषबन्धनः सदृशमाधिपत्यस्य भूतेरुदारतायाः प्रमोदस्य च निजस्य विस्मापितजगत्त्रयं मासमात्रमनुदिवसमुत्सवमकारयत् ॥

अतिक्रान्ते च षष्ठीजागरे, समागते च दशमेऽह्नि, कारयित्वा सर्वनगरदेवतायतनेषु पूजाम्, मानयित्वा मित्त्रज्ञातिवर्गम्, अभ्यर्च्य गुरुजनम्, दत्त्वा समारोपिताभरणाः सवत्साः सहस्रशो गाः सुवर्णं च प्रचुरम् आरम्भनिःस्पृहेभ्यो विप्रेभ्यः, स्वप्ने शतमन्युवाहनो वारणपतिर्दृष्ट इति संप्रधार्य, तस्यैव स्वप्नस्य सदृशमात्मीयनाम्नश्चैकदेशेन समुदायवाच्येन चार्थेन समर्थितानुहारं **हरिवाहन** इति शिशोर्नाम चक्रे ॥

क्रमेण च प्रसवदिवसादारभ्य तत्कालोपजातप्रसवाभिरव्यङ्गनीरोगाङ्गयष्टिभिराप्ततया निपुणमवधृताभिर्धात्रीभिरनवरतमुपचर्यमाणस्य, शुद्धपक्षचन्द्रमस इव प्रतिदिवसोपचीयमानदेहा-

॥ श्रीः ॥

सहृदयासंस्कृतग्रन्थावलिः—३.

# ॥ तिलकमञ्जरीसंग्रहः ॥

अभिनवभट्टबाणादिबिरुदभाजा वासवदत्ताप्रभृतीनामनेकेषां
प्रबन्धानां व्याख्यात्रा सहृदयासहकारिसंपादकेन
वात्स्यचक्रवर्तिना श्रीकृष्णसूरिणा
संकलितः ।



श्रीरङ्गस्थ
श्रीवाणीविलासमुद्रायन्त्रालये
संमुद्रितः ।
१९०९.

॥ श्रीः ॥

# ॥ विज्ञापना ॥

---

आर्याः, विदितमेवेदं भवतां महिम्नः, यदुत बाणभट्टगद्यकाव्योपजीविनां गद्यसंदर्भाणामयमप्यन्यतमो धनपालकविविरचितस्तिलकमञ्जरीप्रबन्ध इति। अयं च ग्रन्थो निर्णयसागरमुद्रालयान्मुद्रापयित्वा यद्यपि बहिरवतारितः, तथापि तत्र दुःसहानामशुद्धीनामापतनान्न तावते फलाय कल्पते, यावते भाव्यमेनेन। तत्र च वितुषीकरणाय प्रवृत्तो न कश्चिदपि संपूर्णं साफल्यं विन्देतेति दर्शनमात्र एव सचेतसां प्रतिभास्यति। अहं च समधिकं परिश्रमं स्वीकृत्य यावन्मति अशुद्धीः परिहृत्य प्रायेण तादृशानि स्थलानि अत्र घटयित्वा तिलकमञ्जरीसंग्रहनामकमेतं सन्दर्भं सह टिप्पण्या सहृदयाद्वारा बहिरवातारयम्। अस्य चायं प्रथमो भागः। क्रमेण च भविष्यन्ति भागान्तराणि। यथामतिवैभवं सर्वतः समालोच्य प्रकटितेऽत्र प्रबन्धे पाठतो व्याख्यानतश्च वैलक्षण्यं गद्यकाव्यपरिशीलिनः स्वयमेव ज्ञास्यन्ति भावुका इत्यलमधिकावेदनेन।

श्रीरङ्गनगरम्।
२६—१—९०९.

इति
विदुषामनुचरः
रा. चक्रवर्ति-कृष्णमाचार्यः।

वयवकान्तेः, अखिलवेदोक्तविधिविदा वेधसेवापरेण स्वयं पुरोधसा निर्वर्तितान्नप्राशनादिसकलसंस्कारस्य, प्रकटितसंभ्रमाभिरन्तःपुरिकाभिराहूयाहूय गाढमाश्लिष्यमाणस्य, स्थानस्थानारोपितमहाप्रभावानेकमणिभिः प्रधानभूषणैः प्रसाधितललितसर्वाङ्गस्य धृतायुधान्तर्वंशिकव्रातसततानुगम्यमानमार्गस्य, स्वभावरम्येषु मणिकुट्टिमेषु क्रीडाशैलकटकेषु नन्दनवनप्रासादकेषु कृत्रिमापगापुलिनेषु च कपोलदोलायमानकमनीयकाकपक्षैः क्षितिपालदारकैः सह क्रीडासुखमनेकप्रकारमनुभवतो निरङ्कुशप्रचारस्य पञ्च वर्षाणि तस्यान्तःपुरेऽतिचक्रमुः ॥

अवतीर्णे च षष्ठे, किंचिदुपजातदेहसौष्ठवस्य, व्यक्तवर्णवचनप्रवृत्तेः, विनयारोपणाय राजा राजकुलाभ्यन्तर एव कारितानवद्यविद्यागृहः सम्यगावेशितगुरुकुलानामवगताखिलशास्त्रमर्मनिर्मलोक्तियुक्तीनामाम्नायलब्धजन्मनामसन्मार्गगतिनिसर्गविद्विषां विद्यागुरूणामहरहः संग्रहमकरोत् । उपनिन्ये च तेभ्यः शोभनदिनमुहूर्ते निर्वर्तितसमस्तेतिकर्तव्यः प्रत्युरसमामुक्तमुक्ताकलापम्, अवदातवेषतया सविशेषदर्शितादरमभ्युत्थितायाः पुरः सरस्वत्याः सितांशुधवलया शरीरच्छाययेव च्छुरितमात्मजम् । अवनिपतिपूजाविशेषवर्धितप्रीतयश्च ते तन्निर्विशेषदर्शिनः प्रेमपुरःसरमशेषाण्यपि शास्त्राणि तस्मै क्रमेणोपादिक्षन् ॥

कुमारोऽपि सतताभियुक्ततया गुरूणाम्, कुशाग्रीयतया च निजबुद्धेः, अल्पेनैव कालेन तेषामभ्यन्तरोऽभवत् । अमुक्ताभियोगश्च दशभिरब्दैश्चतुर्दशापि विद्यास्थानानि सह सर्वाभिरुपवि-

प्रत्युरसं वक्षसि । 'प्रतेरुरसः—' इति समासान्तः ।

द्याभिर्विदांचकार । कलाः शास्त्रं च निरवशेषं विवेद । विशेषतश्चित्रकर्मणि वीणावाद्ये च प्रवीणतां प्राप । भुजबलं चास्य विस्मापितसुरासुरं केसरिकिशोरस्येव सहजमभवत् । आरब्धकार्यस्य त्रिभुवनेऽप्यशक्यं किमपि न प्रायेणाभूत् । एवं च परिणताशेषशास्त्रम्, आसादितसकलास्त्रविद्यान्तरम्, उपलब्धसर्वबुधजनसाधुवादम्, आरूढनवतारुण्यलक्ष्मीलब्धपरिपूर्णसर्वावयवशोभम्, अनुमोदितविद्यं गुरुजनेन हरिवाहनम्, अतिक्रान्ते षोडशे वर्षे हर्षनिर्भरो राजा विसर्जितैराकारणाय सादरमुदाराकारवेषैः प्रधानपुरुषैरनुगम्यमानमतिभूयसा विभवेन स्वभवनमानिनाय । निर्वर्तिताखिलगृहप्रवेशमङ्गलश्चास्य नगरबाह्यायाम् अलघुवप्रालंकृतप्राकारलङ्घिताभ्रम्, अदभ्रतोरणस्तम्भम्, उभयतो निखातशातकुम्भपूर्णकुम्भोद्भासितद्वारदेशम्, अनेकगजतुरङ्गशालाभिरामं कुमारभवनमकारयत् । कर्तुकामश्च यौवराज्याभिषेकम्, तस्य साहायकार्थमाज्ञाभरसहं प्रज्ञया पराक्रमेणाकारेण विनयेन वचनविन्यासेनोद्यमेनापरैश्च त्यागशौर्यगाम्भीर्यादिभिः प्रभुगुणैर्धृतानुकारमुर्वीपतिकुमारमादरप्रेषितैः प्रणिधिपुरुषैरनिशमुर्व्यामन्वियेष ॥



॥ श्रीः ॥

# ॥ ब्रह्मसूत्रवृत्तिः ॥

---

इयं हि '**ब्रह्मतत्त्वप्रकाशिका**' नाम ब्रह्मसूत्रवृत्तिः सुप्रसिद्धसर्वविधमहामहिमभिः **श्रीसदाशिवब्रह्मेन्द्रैः** विरचिता। यद्यप्यद्वैतमतानुसारिण्यो बह्वयो वृत्तयः सन्ति, समुपलभ्यन्ते च मुद्रिताः; अथापि तासु एकापि इयमिव ललितललितपदगुम्भिता, अतिविशदविषयविमर्शविभासुरा, प्रतिसूत्रं प्रत्यधिकरणं प्रतिपादं प्रत्यध्यायं च स्फुटं संगतिनिरूपणरमणीया, परिमिताक्षरा, विषयबहुला, परिमितप्रज्ञैरपि सुबोधा, अध्यात्मविद्यासौधमारुरुक्षूणां प्रथमसोपानायमाना च नास्तीति निर्भयं वदतामस्माकं नांशतोऽपि स्पृशति हृदयमतिशयोक्तिरिति, मन्यामहे, नियतं जानीयुरेव पुस्तकदर्शनेन सर्वेऽपि समचित्ताः। इयं च महामहिम्नां ज्ञानभक्तिवैराग्यतपःपरमधाम्नां संप्रति श्रीशृङ्गगिरिमठमात्मना परिष्कुर्वतां षड्दर्शनीनिष्णातानां जगद्गुरूणां **श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिनाम्** अतिप्रशस्तामाज्ञामनुसृत्यैव मुद्रापयितुमुपक्रान्ता। सुशुद्धाश्च प्राचीनाश्चानेके आदर्शा आनीता एतन्मुद्रणोपयोगितया। एतत्परिशोधनाय सर्वथापि सामीचीन्यसंपादनाय च ब्रह्मश्रीयुताः पण्डितवरेण्याः महीशूरसंस्थानधर्माधिकारिणः श्रीशृङ्गगिरिमठविद्वांसः

श्रीमन्तः रामशास्त्रिणः, मैलापुरीयसंस्कृतमहापाठशालाप्रधानाध्यापकाः एम्. ए. परीक्षोत्तीर्णाः श्रीमन्तः कुप्पुस्वामिशास्त्रिणः, अभिनवभट्टबाणादिबिरुदशालिनः पण्डितकृष्णमाचार्याः, तञ्जानगरस्थाः पण्डितसुब्रह्मण्यशास्त्रिणश्च महान्तं प्रयासं धारयन्ति। तत्र तत्र संशयावसरे च श्रीमतां शृङ्गगिरिमठाधिपतीनां श्रीमहास्वामिनामादेशमनुरुध्य पाठयोजनादिकं क्रियते। इयं च अतिसमीचीनेषु दृढेषु पत्रेषु विशदविपुलैर्देवनागराक्षरैः कमनीयाकारेण मुद्रिता। अधिकरणसूच्यादिकं च योजितम्। आदौ च महती कापि भूमिका आङ्गलभाषया विलिखिता। तस्यां च श्रीसदाशिवब्रह्मेन्द्राणां जीवनचरितम्, सुप्रथितो महिमा, वृत्तेश्चास्या गौरवम्, अन्यान्यानि च ऐतिह्यतः श्रुतानि श्रीब्रह्मेन्द्राणामपदानानि निरूपितानि। अपदानानि च भूयसा श्रीशृङ्गगिरिस्वामिपादैराज्ञप्तानि निवेशितानि। अत्युत्तममुखबन्धसहितस्य सौवर्णाक्षरविराजमानस्य पुस्तकस्य मूल्यं रूप्यद्वयमेव। प्रापणभृतिः पृथक्। अचिरादाज्ञा दीयतां पुस्तकप्रेषणाय। परिमिता एव आदर्शा मुद्रिताः।

अध्यक्षाय,

श्रीवाणीविलासपुस्तकशालायाः

श्रीरङ्गे।



# देशवृत्तान्तः ।

आङ्गलवर्षारम्भदिने श्रीमता भारतचक्रवर्तिना भारतवासिभ्यश्चतुर्भ्यः पण्डितेभ्यः 'महामहोपाध्यायः' इति बिरुदं व्यतारि । ग्वालियर्लष्कर्वासी श्रीमानस्माकं चिरमित्रं श्रीरघुपतिशास्त्रिमहाशयस्तत्रान्यतम इति नितरां तुष्यामो वयम् ।

मद्रपुरान्तर्वर्तिन्यां आयुर्वेदमार्ताण्डभिषङ्मणिपण्डितगोपालाचार्यमहाशयेन अध्यक्षवत्यां श्रीकन्यकापरमेश्वरीदेवस्थानायुर्वेदकलाशालायां परीक्षोत्तीर्णेभ्यो विद्यार्थिभ्यः महति सदसि 'आयुर्वेदभूषणः' इति बिरुदं वितीर्णम् । 'आरोग्य-प्रकाशिका' लेखकः पण्डितदुरैस्वम्यय्यङ्गार्योऽप्येकतम इति सुतरामभिनन्दामः । सभाध्यक्षस्तु सुप्रसिद्धः सर् फालचन्द्रकृष्णनामा मुम्बईनगरवासी महान् ।

चक्रवर्तिनक्षत्रमालायां सप्तविंशे पद्ये 'तदिदम्' इत्यस्य स्थाने 'तादिमाम्' इति पठनीयमिति निवेद्यते । इदमिति क्रियाविशेषणं वा 'इद कविभ्यः' इत्यादाविव ।

## बालेयम् ॥

बालेयाख्यमिदमौषधं अतिप्राचीनान्यपि अर्शांसि (मूलरोग) सर्वाणि कतिपयैरेवाहोभिः मूलाद्विनाशयति । अतिचिरन्तनं मलबन्धं बहुभिश्चिकित्साविशेषैरनुपशान्तमप्यपोहयति । **बालेयमिदं** रक्तमतिदुष्टमपि सम्यक् संशोधयति । अतश्चानेकान् त्वग्दोषान् (पामा दद्रु कुष्ठादीन्) संशमयति । दुष्टरक्तसमुत्पन्नश्च आमवातः (Rheumatism) प्रशममधिगच्छतीति अधुना कतिपयैः प्रयोगैरभिज्ञायते । अतिप्राचीनान् **अर्शोरोगमलबन्धरक्तदोषान्** एकस्याः कूपिकायां एव सेवनेन सम्यगुपशमयतीदं **बालेय**मित्यत्र न कोऽप्यस्ति संशयः । एकस्याः । कूपिकाया मूल्यम्, **सार्धं रूप्यकम्**, (Rs. 1-8.) प्रापणव्ययः पृथक् ।

औषधान्यन्यान्यपि बहूनि सन्ति अस्मदौषधशालायामेव सज्जीकृतानि । व्याधीनां स्वरूपाणि सम्यक् सलक्षणानिदानमालिखद्भ्यः, तत्तद्रोगानुसरतो नितरां विचार्य अनुप्रेष्येरन् औषधान्यस्माभिः ।

पण्डित यम्. **दुरैस्वामि अय्यङ्गार्यः** ।
(Certificated) आयुर्वेदचिकित्सकः ।
**तेप्पकुलम् ; तिरिचिनापल्लि** ॥

# Brahmasutra Vritti

BY THE FAMOUS

## SADASIVENDRA SARASWATI.

THIS is a very rare and precious work by one of the most revered personages whose name has become a household word in Southern India and whose Samadhi at Nerur is even now visited as a place of Pilgrimage by all. Sadasivendra Saraswati or Sadasiva Brahman as he is more familiarly known, was a great Sanyasin and was the author of several Vedantic works such as Upanishad Dipika, Atmavidyavilasa, Advaitarasamanjari, Bodharya, Siddhantakalpavalli, etc. His greatest work is this Vritti on the Brahmasutras known as **Brahma Tatvaprakasika** in which is clearly given the essence of the Bhashya of the great Sri Sankara Bhagavatpadacharya. At the command of His Holiness the present Sri Jagadguru of Sringeri we are bringing out a correct and good edition of all the works of Sadasivendra Saraswati and the Brahmasutra Vritti forms the first Volume of the same. A detailed English Introduction is added at the beginning of the volume giving in full all available information, whether historical or traditional, about the author. A list of the Adhikaranas and an alphabetical index of the Sutras add much to the usefulness of the book.

400 pages Cr. 8vo. Cloth bound: Gilt lettered. Price **Rs. 2.** only; Postage extra.

THE MANAGER,
Book-selling Department, *Sri Vani Vilas Press*, SRIRANGAM.

REGISTERED No. M. 103



Vol. XIII. No. 10.

# The Sanskrit Journal

— OR —

# ॥ सहृदया ॥

संपादकः
र. कृष्णमाचार्यः, एम्. ए.

सहकारिसंपादकः
रा. च. वि. कृष्णमाचार्यः.

सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

विषयाः ।



PUBLISHED AT MADRAS.

SRI VANI VILAS PRESS.
SRIRANGAM
1909.

## सहृदया नियमाः ।



१. सहृदयाया द्वात्रिंशत्पृष्ठात्मिका एकैका संचिका प्रतिमासं प्रचार्येत । अस्यां च ललितपदघटिता अवश्यज्ञेयविषयभासुरा गद्यमयाः प्रबन्धा एव प्रायेण भवेयुः ।

२. उपन्यासलेखकैरपि महाशयैः सुस्पष्टमेकस्मिन्पत्रपृष्ठे मुद्रितग्रन्थरीत्या संधिविरामपुरःसरं विलिख्य प्रेषिता एव प्रबन्धाः सहृदयायामवकाशं लभेरन् ।

३. तत्तदुपन्यासप्रकाशनाप्रकाशनयोः, तत्र तत्र परिवर्तने वा पत्राधिपेच्छैव निष्पक्षपाता नियामिका ।

४. प्रेषिताः प्रबन्धा अप्रकाशिता दत्ते शुल्के परावर्त्येरन् । उत्तराकाङ्क्षिभिश्च शुल्कपत्रमवश्यं प्रेर्यम् ।

५. अधिकभागयोजनेऽपि वार्षिकं मूल्यं परं यथापुरं रूप्यत्रयमेव । प्रापणव्ययो न पृथक् । एकस्याः संचिकायास्तु आणकचतुष्टयं मूल्यम् । इङ्ग्लण्डादिषु तु अस्या मूल्यं नव षिल्लिङ्गाः ।

६. उपन्यासाः, पुस्तकानि च "सहकारिसंपादकः, सहृदया, कोत्तवाल्चावडि, तृच्चिनाप्पल्लि" इत्यत्र प्रेर्याणि । एतदन्यसमस्तकार्यार्थमपि लेखाः "मानेजर्. सहृदया आपीस्. मद्रपुरी" इत्यत्र प्रेषणीयाः ।

## विज्ञापनप्रकाशन नियमाः ।

१. संपूर्णस्य एकस्य पृष्ठस्य वार्षिकं प्रकटनमूल्यं चतुर्विंशती रूपिकाः । रू. २४.

२. प्रतिमासमेकस्याः पङ्क्तेः आणकद्वयम् । अणा. २.

३. चिरकालभाविनो विज्ञापनप्रकाशनस्य तु सौकर्यं क्रियेत । तच्च कार्यालयाद्विज्ञेयम् ।

॥ श्रीः ॥

# ॥ सहृदया ॥



कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि ॥

संपु. १.] कीलकवर्ष पौषमासः । [संचि. १०.

## सुभाषितानि ।

हन्त स्वयमशक्तैरप्यशक्योऽर्थः समीरितः ।
मुख्यसंबन्धमाहात्म्यान्नीयते सिद्धिमञ्जसा ॥

पल्लवतः कल्पतरोरेष विशेषः करस्य ते वीर ।
भूषयति कणमेकः परस्तु कर्णं तिरस्कुरुते ॥

वाचाटोक्तौ वागमृते वा सुकवीनां
स्तोकप्रज्ञास्तुल्यदृशो हन्त भवन्ति ।
गोमायूनां कोकिलयूनामपि शब्दे-
ष्वेकाकारा मानसवृत्तिर्महिषाणाम् ॥

श्री वेङ्कटाध्वरी ।

# भारतखड्गाः ।

---

| | | |
|---|---|---|
| स्ववासभुवममु | मवापितं ग | न्धवाहसुतवा- |
| सवात्मजाभ्यां | नवादथ परा | भवादुपगता- |
| दवाङ्मुखं मा | नवाधिपोऽसा | वुवाच विहस- |
| न्निवारि भोः सह | भुवा मनसि सु | भ्रुवास्यते न- |
| स्तवासुहरणं | निवारयन्त्या | न वासचरितो |
| भवात्र पुनरिति | गवास्य तप्तो | दवाग्निसमया |
| जवादपसरन् | शिवात्स भाव्या | हवान्तरे पा- |
| ण्डवान्निरोद्धुं | न वासविं वर | मुवास लब्ध्वा |
| जयद्रथः पुर्या | भजति हि दुर्बुद्धि | रीदृशीं चर्याम् ॥ ६१ ॥ |

| | | |
|---|---|---|
| पुरा धर्मजं | दुरात्मतमधा | र्तराष्ट्रनृपसि- |
| न्धुराजकृतदु | ष्कराभिभवभर | परामर्शगुरु- |
| तराधिमवदत् | गिरा मृकण्डोः | पराध्यैः सुतो |
| धराधीश भोः | स राघवो दिन | करान्वयपति- |
| र्गुरावादरा | न्निराकृतनिजा | धिराज्यो वना- |
| न्तराधिवासी | वरारोहया | नुरागवत्या |
| शरारुदशकं | धरापहृतया | दुरापशुचमति- |
| तरामनुभवन् | अरातिजिदथो | रराज पुनरपि |
| पुरे तया साकम् | एत्यान्तं तुष्टि | रेव सरसा कम् ॥ ६२ ॥ |

श्रुताथ तेनो दिता कथान्या क्षिताविह्राजा-
यताश्वपतिरिति पिता स्व इव नृषु हितावहोऽत-
ष्यतानपत्यः सुतावाप्तये वितानवह्नौ
घृताहुतिमसौ ततान तस्य व्रताचरणनि-
ष्ठितात्मनोऽब्दा गता दशाष्ट च जितात्मनात्र
कृतावनेनो च्छ्रिता हि सावि त्र्यतानि मनुरथ
हुताशनाद्दव ततार सा समु दिताकृतिः प्रमु-
दिता तमवदत् पितामहोक्त्या बतात्मजा प्रभ-
विता तवेति ततः सावित्रीत्यत उदै त्सुता महतः ॥ ६३ ॥

स्तवाविषयनव नवावभास्यव यवानुरूप्य-
प्रवाहविभ्रम भुवा तया सु भ्रुवाखिलजग-
न्निवासिसुरमा नवादिषु वरं तवानुरूपं
द्रवान्वेष्टुमिति गवा निजपितु र्जवादशेषा-
नवाप्य देशान् दवाग्निभे क्वचि दवामशुभमा-
र्दवाभिरूप्या र्जवादिगुणवै भवान्वितः स्मर
इवाद्भुतवपु र्युवा श्रुतः स त्यवानिति स्वक-
विवाहयोग्योऽ न्ववायवानै क्ष्यवादि पितरि च
स यं द्युमत्सेनः असूत निजराज्य नयनयुगहीनः ॥ ६४ ॥

यदेव तस्मिन् प्रदेशेऽन्वभूत् तदेषा वधूः
सदेशे पितु र्मुदेरयन्त्य भ्युदेयुषा ना
रदेन खलु निज गदे गुणौघा स्पदे तत्र किं
चिदेष्यदायु र्यदेनमगुणं वदेऽहमिति शुक्-

| | | |
|---|---|---|
| प्रदेऽपि वचने | तदेयमवदत् | नृदेव भोस्त्वं |
| प्रदेहि मां सं | मदेन तस्मै | हृदे न मेऽन्यः |
| स्वदेत मनसा | स्वदेहो मया | त्वदेशि कृतसं- |
| पदे श्रये तव | पदे इति प्रभु | मुदेऽश्वपतिरपि |
| गिरा स्वकन्यायाः | सदध्वनिष्ठा हि | समधिकन्यायाः ॥६५॥ |

| | | |
|---|---|---|
| स्वयेह स वधूं | धियेदृशीं शुभ | मये दिनेऽदात् |
| नयेन शुभबु | द्धयेऽस्मै निजा | न्वयेन्दवे सा |
| धयेष्टकर्मा | नयेति सा सह- | दये तु तस्मिन |
| प्रिये रतिमना | मयेऽन्वहं शि | श्रियेऽथ तस्या |
| भयेन सुमहो | दयेन भक्त्यति | शयेन च विसि- |
| ष्मिये गुरुजन | स्तयेत्थमिह कति | पये वासरा |
| रयेण नीता | स्त्रये गतेऽह्नां | क्षये ऽस्य भाविनि |
| जयेऽन्तकस्या | शयेन तस्थेऽ | मुयेष्टदेव- |
| स्तुताथ तुर्यदिने | गुर्वनुमतिरापि | भर्तुरनुगमने ॥ ६६ ॥ |

| | | |
|---|---|---|
| रमादिवह्निः | समाह्नि तस्मिन् | सुमानसा प्रिय- |
| तमानुगा सा | द्रुमाग्रतस्तं | समाहृतफलं |
| क्रमादथेन्धन | समार्जनविधौ | श्रमार्तमङ्के |
| समावेशितो | त्तमाङ्गमधियं | समालोक्य वे- |
| पमानहृदया | कमाश्रयेऽहं | न माति हृदि शुक् |
| ममास्ति न गति | स्तमापदुदयं | समागतोऽयं |
| यमावेदय | त्स मान्यो मुनिः | किमात्थ भो इति |

समाकुला त    त्प्रमापणागत    यमालोकिनी
सती तदोदस्थात्    गत आत्मा वर्ष्मण    स्ततोऽस्वस्थात् ॥ ६७ ॥

पराध्र्यतपसा    नुरागिणी सा    परासुनिजसह-
चरान्वितं ध    र्मराजममुना    निराकृतापि
स्थिरानुयान्ती    गिरा स्वया विस्र्    मरानुकम्पा-
भरादमुष्मा    द्वरानवाप्नो    त्तरामभिभवो-
त्तरा श्वशुरगा    क्षिराज्यहानि    श्चिरादपेयात्
गुरावथात्मनि    निराधयोऽत्र    स्युरात्मजाः शत-
मिराभुज इति    त्वरात एत्य च    दुरापां चिरा-
युराढ्यधवतां    धरायामुदि    त्वरासुनोत्त-
स्नुषा समं पत्या    मुदा न्यवर्तत च    भाविसदपत्या ॥ ६८ ॥

वनान्तरे वे    दनाभराच्चे    तना मम गता
न नाम बुद्धो    दिनान्तसमयोऽ    धुना निशा खलु
जनाः स्वपन्त्य    ध्वना प्रयायां    क नायिके मां
विना गुरुर्मम    मनागप्यद    र्शनासहः शुच-
मनाथवदियात्    घनामिति च्छ    द्मना विना स्वा-
स्नना कृतविनि    न्दनाधिपाश्वा    सनाभिलापो
न्मना निशि तद    ङ्गना शनैरुप    निनाय तं शम-
धनाश्वासना    दिना बहुलया    तनारुधा पितु-
रुपान्तमाश्वसतः    सहजानेर्वृत्ति    रीदृशी हि सतः ॥६९॥

ततान्धकारा    गता निशापि    क ताम्यति वने
स तापहर इति    पितात्युत्सुको    लतागुल्मतरु-

वितानजुषि सु  व्रताश्रमान्ते  सता चक्षुषा
कृतान्वेषणो  नितान्तमभ्यु  द्यता स तेन
व्यतानि मुदितो  व्रताथ वध्वा  कृतान्ततोऽभ्या-
गतादटव्यां  वृता गुराव  न्धताच्च्युतिरधी-
शता स्वमात्रोः  शतात्मजी जी  विताप्तिरपि नि-
र्गतायुषि स्वक  पतावित्यमो  दतायं तत-
स्तथाखिलं जातं  स्यात्सुखमनया त्व  इति स ऊचे तम् ॥

कदाचन नभः  पदादवतर  न्मुदात्ततिमिर-
च्छिदाप्य कर्ण  स्वदानरूपा  पदानभूम्ना
वदान्यपुंगव  मदापहं रवि  रुदाहरन्मम
यदात्मजस्त्वं  वदामि तव हित  मुदास्स्व मा त्वं
यदा द्विजाकृति  भृदापतन्वल  भिदालपिष्यति
यदाशोऽहमे  म्युदार दिश मे  मुदा तदिति मा
तदा तदिष्टं  प्रदा दिशेश्चे  त्सदाहवे दु-
र्हृदायुधैर्मृति  निदानमेष्यसि  विदारमेष
ह्यवध्यताहेतुम्  एष्यति सहकवच  कुण्डलमुपैतुम् ॥ ७१ ॥

ब्रुवाणमेवं  दिवाकरमसा  वुवाच यद्यपि
गवादिदान  स्तवात्मकजन  प्रवादविमल-
श्रवा भृशमहं  भवानि तदपि तु  तवार्य धीस्त-
न्निवारणे कथ  मिवाभ्युदेति  द्युवासितिलकः
स वासवो म  न्निवासमेत्या  भिवाञ्छितं चे-
त्स्ववाचार्थयेत्  जवादभीप्सित  मवापयंस्त-

अवाभ्युदयभाक् ध्रुवामुपेयां भुवा परिहितां
दिवा च कीर्ति प्रवाहवन्मृति भवावबार्यौ
निरोद्धुमीष्टे क: इति स श्रुत्वा ननन्द सविवेक: ॥

ग्रहाधिपो व्या जहार कर्ण विहासिपाथो-
रुहामलमुख: सहार्दवचनै- र्न हाप्यते ते
स्पृहा वितरणे महानसि गुणै रहार्यधृतिरसि
जहसि यद्वि ग्रहाभिमानं वहामि संमद-
मिहाग्रहे ते गृहानुपगतोऽ हिहार्च्यतामुरु-
महा महानु ग्रहात्तत: सं प्रहाररूपे
विहारकर्मणि सहायभूतां गृहाण रिपुनि-
ग्रहाय शक्ति विहाय समये न हातुमर्हसि
मदुक्तमिति सोऽगात इन्द्रश्चावातर न्नभोभागात् ॥ ७३ ॥

बलारिरथ धी बलाद्द्विजवपु र्वलाहकै: सं-
कुलादिह नभ: स्थलादवतरन सलालसोऽर्था-
भिलाषियाचक कुलाभिष्टवा भिलापकोला-
हलाढ्यमर्कज विलासगृहमु ज्ज्वलाकृति भजन
ललास तेना तुलार्हणोदित जलाद्यपचितो
ललाप किंचित किलार्थये दिश फलाय यस्मै
चलामि वागशि थिलास्तु त इति च्छलाढ्यवाक्यो-
पलालितोऽस्मै स लाघवात्कु ण्डलाग्र्यकवचौ
ततोऽर्थितौ प्रादात् को दुस्त्यजमर्थिने दिशेन्मोदात् ॥ ७४ ॥

(क्रमश:)

# वाणीविलापः ।

---

अथ पण्डितराजमण्डलीविरहो भाग्यविपर्ययादभूत ।
क्रमशो बहुमानानापि मे गणरात्रेण कथावशेषिता ॥ ११ ॥

अयि जीवितनाथ सांप्रतं मम कष्टां कथये कथं दशाम् ।
रसना परिशुष्यति स्वरं स्थगयत्यश्रु दहत्युरुव्यथा ॥ १२ ॥

ननु नाद्रियते यथापुरं सकलोऽप्यद्भुतकाव्यपद्धतिम् ।
यदि कोऽपि कदापि शीलयेत्कुरुते सोऽपि तृणाग्रचर्वणाम ॥

अतिदुर्भरकर्णनिष्ठुरप्रकटाडम्बरवाक्यधोरणीम् ।
लिखितां पठितां गुरुक्रमात्स्वयमुद्गीर्य वलन्ति शास्त्रिणः ॥

बत कष्टमिदं यदस्पृशन्नपि साहित्यकलामनाकुलाम ।
सदलंकृतिदर्शने किमप्यभिधत्तेऽभिनयन्नभिज्ञताम ॥ १५ ॥

किमिदं यदुत प्रवर्धयत्यपि मूढो व्यपदेशमात्मनः ।
बत शास्त्रकथाविदेशभागपि शास्त्रिव्यवहारमिच्छति ॥ १६ ॥

यदि कश्चन संप्रदायतः क्रमते शास्त्रकुले मनीषया ।
बहुमानपदं स एष मे न तथास्तीति हि हन्त शोच्यते ॥ १७

न रसो न चमत्कृतिर्न वा पदचातुर्यमलंकृतिः कुतः ।
अधिगन्तुमथापि केवलं कविशब्दं कुमतिर्हिनस्ति माम ॥ १८

न पदार्थविबोधचातुरी न च संदर्भविमर्शवैखरी ।
न च भावनिबन्धनादरो न रसाद्वैतविवेचनाभरः ॥ १९ ॥

परमेकवराटिकाप्तये विवृणन् किंचन पङ्क्तिपूरकम ।
कुमतिर्बत वञ्चयन्परानानया प्रक्रियया प्रसिध्यति ॥ २० ॥

के. कल्याणी ।

॥ श्रीः ॥

# ॥ वररुचिकथाविमर्शः ॥

---

वाक्यकारस्य जीवनवृत्तान्तः कात्स्न्येंनोपवर्णितः किल सहृदयायाम् । रमणीयमिदं चरितं बृहत्कथायामाद्ये लम्बके कथावतरणकेषु तरङ्गेषु सम्यगुपपादितं दृश्यते । आ जन्मनः कात्यायनस्यापदानं सुनिपुणं विमृशतामाधुनिकानां कीदृशी मनोवृत्तिरिति किंचिदिव विचारयामः । वररुचिमधिकृत्य प्रवृत्तेयं कथा किं केवलमात्मगुणोपदेशायार्थवादरूपेण बृहत्कथायामुदाहृता, उत इतिहासवत् भूतपूर्ववृत्तानुवर्णनाय प्रवृत्ता, आहोस्वित् वाक्यकारस्य माहात्म्यमारोपयितुमनन्तरकालिकैः स्वकपोलकल्पिता, अथवा ऐन्द्रव्याकरणस्यादर्शनं तत्स्थाने पाणिनीयस्य प्रतिष्ठां चावगमयितुं शाब्दिकैः कथारूपेण गुम्भिता, इति विशयः प्रथमं विमर्शपदवीमास्कन्दति ।

सत्यमिमां कथां सुनिपुणं निरूपयतां बहव आत्मगुणाधायका धर्मास्तत्र तत्रोपलभ्यन्ते । तथा हि— अन्येषां रहोवृत्तावगमकौतूहलं देवानामपि पतनहेतुः, किं पुनर्मानुषाणामित्यादावेवोपदिश्यते । निखिलशास्त्रतत्त्ववेदितारोऽपि विद्वांसो राजार्हैर्वसनाभरणभोजनादिभिरुपच्छन्दिताः क्षणादेव कलुषितमानसा अस्तमितविवेका आत्मनः स्वरूपं विस्मरन्तीति शिक्षयति योगनन्दोदन्तः । उपकोशावृत्तान्ते पतिव्रतानां सरणिः सम्यगुपपादिता रञ्जयति मनांसि रसिकानाम्; कामार्तानामपथप्रवृत्तानां धूर्तानां लोकद्वयेऽप्यनिष्टानुबन्धिनी दुर्गतिः, यातनानुभवश्च दैवादापततीति बोधयति च ।

श्लिष्यत्पञ्चाङ्गुलिर्हस्तः, चिरादस्मिन् देशे व्यवहारनिर्णयाय तत्र तत्र जनपदेषु प्रतिष्ठितां 'पञ्चायत्त्' (पञ्चसु आयत्तम्) इति व्यवह्रियमाणां परिषदमनुस्मारयतीव । कात्यायनस्य वधदण्डापादकं चित्रप्रतिकृतिलक्षणविज्ञानप्रदर्शनम्, मेधाविनोऽपि भारतीविलासवन्तोऽपि देवतानुग्रहविषया अपि देशकालोचितमज्ञात्वा व्यवहरन्तः सन्तो महतीमापदमनुभवन्तीति द्योतयति । वररुचिना प्रकाशितो राजपुत्रभल्लूकयोरुदन्तः, मित्रद्रोहविश्वासघातुकत्वादिदोषाणां वर्जनीयत्वमवबोधयति । गृहिण्या मातुश्च देहपरित्यागं श्रुतवता वररुचिनाऽनुभूतः शोकावेगः, प्रकृतिसंबन्धो महात्मनामधिगतलोकतत्त्वानामपि चित्तं क्षोभयति; किं पुनः प्राकृतानामित्यभिव्यञ्जयति । शाकरसवृत्तान्तः, व्रतोपवासनियमशोषितकरणग्रामाणां महामुनीनामप्यहंकारवशगत्वं चित्तनैर्मल्यानवाप्तिं च प्रकाशयति । किं बहुनोपन्यासेन । कथेयं सुसूक्ष्ममनुविमृशतां तत्तत्संस्कारानुगुणं धर्माननुशिक्षयतीति व्यक्तमेव सहृदयानाम् ।

किं तर्हि कथेयं केवलमर्थवादरूपा धर्मानुशिक्षणार्थमुपक्षिप्ता स्वांशे प्रामाण्यं नावहति? यदि वाक्यकारस्य सत्ता अभ्युपगम्यते, तर्हि चिरात्परम्परागतायास्तत्प्रवृत्तेः साकल्येनाङ्गीकरणे का नाम विप्रतिपत्तिः?

अत्र केचित् प्रमथगणेष्वेकतमस्य पुष्पदन्तस्य भवानीशापेन मर्त्यलोकावतरणादिकं तथात्वेन नाभ्युपगच्छन्ति । हेतुविचारमालम्ब्य व्यवहरन्त इमे एवं कोलाहलं कुर्वन्ति— 'वररुचेर्व्याकरणशास्त्रेऽनितरसाधारणं पाण्डित्यं जन्मान्तरीयसंस्कारादेव संपन्नमिति विश्वसद्भिः शाब्दिकैः, एतच्छास्त्रनिदानभूतस्य महेश्वरस्य निकटे

तस्य पूर्वस्मिन् जन्मन्यवस्थितिः स्यादिति कृत्वा कथेयमुपवर्ण्यते । भूतनाथस्यानुचरेष्वेकतमः पुष्पदन्त एव वररुचिरासीदित्यत्र को वा साक्षी? किं वा निश्चायकं प्रमाणम्? विद्याधरचरितमलक्षितं श्रुतवतोऽप्यनुचरस्य विषये तादृशः कठोरो दण्डः करुणामयस्वान्तया शर्वाण्या विहित इति कथं विश्वसनीयम्? 'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम्' इति गीतावचनं सर्वात्मना विश्वसन्तस्तथैव दृढसंस्कारवन्तो भारतीयाः, पतञ्जलिरादिशेषः, बादरायणो नारायणः, कपिलः साक्षाद्विष्णुरेव, निरुक्तकारो यास्कः स्वयं भास्कर एवेत्यादिवत्, पाणिनीयसूत्रोपस्कर्ता वाक्यकारोऽपि महेश्वरसंबन्धी व्याकरणशास्त्रमस्मिन्देशे प्रचारयितुं भगवता पार्वतीपतिना शापेन भुवमवतारित इति विश्वस्य इतिहासमिमसुदाहरन्ति' इति ।

यदि च जीवात्मनो नित्यत्वं जन्मान्तरीयसंस्कारवशगत्वं चाभ्युपगम्यते, तर्हि वाक्यकारस्य पूर्वजन्मनि पुष्पदन्तावस्थाद्यङ्गीकरणे कीदृशी ह्यनिष्टपम्परा संभवत्याधुनिकानामिति नोपलभामहे ।

मूर्खो वर्षः, भार्यया प्रकोपितो निर्वेदेन तीव्रं तपश्चरित्वा स्वामिकुमारस्य प्रसादमुपलभ्य व्याकरणशास्त्रमाधिजग इत्यत्र न कोऽपि विशय आधुनिकानां प्राचीनानां च। तपःशब्दस्य स्वाध्यायपरत्वमारण्यकेषु प्रसिद्धम् । गुरुकुलवासो नामोग्रतरं तप एवेति गण्यते । स्वामिकुमारेण प्रथमं प्रकाशितमैन्द्रं व्याकरणं तज्जनकेन भवानीपतिना पाणिनिमुखादसिद्धीकृतमित्यस्यापि, कार्तिकेयाराधकेन गुरुणैकेन प्रचारितमैन्द्रं व्याकरणं महेश्वराराधकेनान्येन पूर्वपक्षीकृतमित्येव तात्पर्यमिति नवीना वदन्ति । अत्रापि तत्तद्वस्तुनिष्ठा शक्ति-

दैवतप्रसादेनैवोपलभ्येतेति वदतामास्तिकानामीदृशो विचारः स्वरसतया न प्रतिभास्यति । शरीराच्छरीरान्तरप्रवेशः कथं शक्यते इत्यत्र योगशास्त्रमेव प्रमाणम् । योगिनो ह्यत्यद्भुतान्यवाङ्मनसगोचराणि कर्माण्यनुष्ठातुं शक्नुवन्तीति भारतीयानां चिरप्ररूढा संभावना। अत्रापि व्याडिर्वररुचिश्च महारोगाक्रान्तं गतप्रायजीवितं नन्दं महौषधैः प्रत्युज्जीव्य, गुरुदक्षिणार्थं तस्मात्प्रभूतं द्रविणमवापतुरिति नवीनानामाशयो न हृदयंगमः पण्डितानाम् ॥

नन्दभूपवृत्तान्तो विशाखदत्तेन मुद्राराक्षसे सम्यगुपपादितो बृहत्कथाप्रोक्तान्नितरां विसंवदति । तथा हि-- स्वामिभक्तेन शकटालेनादृतो नन्दस्यात्मजन्मा चन्द्रगुप्तः क्षत्रिय इति वर्ण्यते बृहत्कथायाम् । नाटके तु स्वामिभक्तिभरितेन राक्षसेन विद्विष्टश्चन्द्रगुप्तो वृषल इत्यवगम्यते । पुत्रशतैः साकं शकटालस्यान्धकूपप्रवेशरूपदण्डो योगनन्दे शकटालस्य प्रद्वेषहेतुरिति कथायाम् । रूपके ह्यन्धकूपनिपतितानां नवाधिकनवतेर्भ्रातॄणां पितुश्च विनाशे एकावशिष्टस्य चन्द्रगुप्तस्य नन्देषु वैरनिर्यातने बीजमित्युक्तम् । नन्दवंशोन्मूलनहेतुरतिकोपनस्यामर्षणस्य चाणक्यस्याग्रासनादाकर्षणमितीदं यद्यप्युभयत्र समानम्; परं तु नाटके निर्दिष्टा नन्दा नवसंख्याका भ्रातरः; कथायां तु योगनन्दस्त्वेक एव। नन्दोन्मूलनार्थं कौटिल्येन कृत्या साध्यते इति कथायाम्; नाटके तु छलात्पर्वतकमुखेनान्तर्गृहे निर्दग्धा नन्दा इत्युपवर्ण्यते । चन्द्रगुप्तरक्षणाय साचिव्यपदे चाणक्यं नियुज्य शकटालस्तपोवनमगादिति वाच्यते कथायाम् ।

(क्रमशः)

# आरोग्यप्रकाशिका ।

प्रायश्चैतेषामेवान्तिके प्रदुष्टमलिनोदकवाहिन्यः प्रवहन्ति प्रणाल्यः । प्रणाल्युदकानामेकत्रावस्थितये चात्रैव महान्तो गर्ता निखन्यन्ते । मलाद्युत्सर्गस्थानानि च कूपस्य नातिदूर एव स्थलेषु बहुषु विशेषतो नगरेषु सन्ति संस्थापितानि । इत्थमन्यान्यपि सन्ति कारणानि बहूनि, यानि नामेह चिन्तयितुमपि चेतसा न शक्यानि— इति । एतादृशै-र्हेतुभिरस्मिन् कूपे दोषाः कियन्तः संयुज्येरन्निति निर्धार्यतां नाम सर्वैरपि स्वयमेव । येषामुत्तानकूपानामुन्नताः कठिनाश्च सन्ति उपरि भित्तयः, तेषामपि अम्भांसि आविशन्ति सत्यं मलानि भूयांसीति बह्वीभिः परीक्षाभिर्निरणायि पदार्थतत्त्वज्ञैः । पीनाहस्योर्ध्वं भित्तेर-भावे तु कूपेष्वमीषु दोषा इतोऽप्यतिशेरते । अतिविस्तृतमुखेषु हि कूपेषु संनिकृष्टस्थितेभ्यो भूरुहेभ्यो वीरुद्भ्यश्च निष्पतन्त्यस्मिन् नैकशः पर्णानि, अनन्तरं च कालेन कियतैरेव संकोथितुमपि तान्यु-पक्रमन्ते । तदनु सलिलमपि कीटैर्बहुभिरभिव्याप्तं भवति । किंच वायुना बहूनि रजांसि, विविधाः प्रदुष्टाश्चावकराणां निकरा अभिवा-ह्यमानानि प्रतिपदमेषु समाकीर्यन्ते । यथा यथा चेह उत्तानकूपेषु सलिलमाश्यायते, क्रमशः कालुष्यमपि तथा नितरामेषूपचीयते । अतिविप्रकृष्टादपि प्रदेशात् एतत्कूपोदकेषु रथ्योदकानि अन्तरेव धरण्याः समागत्य निपतन्ति । अत एवोदीर्यते अतिनिकृष्टतममिद-मुदकमुत्तानकूपस्येति ।

उत्तानकूपाः कथं नाम दोषेभ्य एतेभ्यः संरक्ष्यन्ताम् ? कति नाम सन्त्यत्र प्रकारा इति किंचिद्विवृणुमः ।

१. उत्तानकूपानां निम्नत्वसमुत्पादनाय यावच्छक्त्यस्माभिः प्रयतितव्यम् ।

२. कठिनाभिरिष्टकाभिः, शिलाभिः, सुधाभिश्चामूलाग्रमभितः कूपं सम्यङ्निबध्य दृढीकुर्यात् । उपरि च कूपं परितः पीनाहं किंचिद्दूरं सुधेष्टकचितं विदध्यात् । तेन च कुट्टिमेन क्रमात् कूपादारभ्य निम्नेन भावितव्यम् । पीनाहं तु स्थलेभ्यश्चेतरेभ्यः किंचिदुन्नतं कुर्यात् ।

३. अन्तर्धरणि येन मार्गेणाद्भिदसुदकमभिवहति, विदित्वैतत्सम्यक् मार्गे तस्मिन्नेव निखनेत्कूपम् ।

४. न कदापि क्वचिदपि कूपस्य मुखं विदध्यात् विस्तृतम् ।

५. कूपात्सलिलोद्वाहनाय जलोद्धाटनयन्त्रमेकं (Pump) तत्रैव स्थापयेत् ; घटं वा निर्मलमेकं शुद्धरज्ज्वा साकमिह निधाय तेनैव च जलमाहरेत् । नहि कदापि पात्राणि निर्मलाभिरद्भिरशोधितान्यत्र प्रक्षिपेत् ।

६. बहोः कालादुदकं यस्य कूपस्य भवति नोपयुक्तम्, सम्यगस्यापसार्यैतत्सर्वं सलिलम्, अतः परमागतं नवं जलमेव भवत्युपयोज्यम् ।

७. यथास्मिन् न हि दुष्टानि रजांस्याविशन्ति, तथा विना जलाहरणसमयमपरेषु कालेषु पिधानेन केनचिद्दृढेन कूपमुखमनवरतं पिदध्यात् ।

८. न हि गृहाणामन्तिके कूपं कमपि निखन्यात् । गृहाणां कूपस्य च मध्ये नल्वार्धपरिमितेन (हस्तशतद्वयी) वापि दूरेण भवितव्यम् ।

९. सकृद्वापि संवत्सरस्य कूपस्याधः संचितान्मलिनान्मृदादीन्बहिराहृत्य सम्यक्कूपं संशोधयेत्। कर्मैतदपि ग्रीष्मस्यान्तिमेषु वासरेष्वेव कुर्यात्। यतस्तेष्वेव दिवसेषु कौपमुदकं नितरां शुष्कीभूयाल्पमेवावशिष्यते।

इत्येवंविधा उपायविशेषा अनवरतमतिजागरूकैर्जनैर्यद्यवलम्ब्यन्ते, तदानीमुत्तानकूपस्याप्युदकं न हि कस्याप्यपायं कमप्यावहेत्। एष्वन्यतमस्य यस्य कस्यचिदपि सत्यां हानौ, न हि कंचिदप्यपायमिदमुत्पादयेदिति वक्तुमिह न पारयामः॥

## निम्नकूपाः।

अनधिगत एव सलिले, मध्येकूपं (जलस्योपरितने भागे) यत्र कठिनं स्थलमुपलभ्यते, स निम्नकूप (Deepwell) इत्युच्यते। निम्नकूपत्वेन व्यवह्रियमाणा अपीमे क्वचिन्नितरां भवेयुरुत्ताना। न हि कदापि मन्यतां नाम अगाधत्वमेव निम्नकूपानां लक्षणमिति। गाधत्वस्यागाधत्वस्य वा न ह्यस्ति काचिदपि परिमितिः। तस्मादिदमेव भवति लक्षणं निम्नकूपस्य, यत्किल मध्येकूपं कठिनस्य स्थलस्याधिगमो नाम। मध्येमार्गम् अतिकठिनस्थलस्य सद्भावात्, अगाधत्वाच्च, न ह्यमीषु निम्नकूपेषूदेकषु रोगहेतवो जीवपरमाणवः सन्ति। अतोऽमीषु कूपेषु यदि दोषाः केचन संक्रामन्ति, तदा विवृतेभ्यः कूपमुखेभ्य एव प्रविष्टा भवेयुरित्यधिगन्तव्यम्। यथा न कश्चिदपि दोषपरमाणुः कूपमाविशति, तथा क्रियतां नाम कूपस्य सम्यङ्मुखपिधानम्। एवं कृते, निम्नकूपस्योदकमतितरां पानाय भवत्यर्हम्। यद्यपि कूपस्य मुखं पिधानेन केनचित्पिधीयते, तथापि

विकलेभ्यः पीनाहद्वारेभ्यः प्रदुष्टान्यम्भांसि द्रव्याणि वान्यानि प्रविशेयुः । अतः कूपमभितः कांचित् भित्तिं नेमिवद्धनाभिः कठिनाभिश्चेष्टकाभिरारचयेत्। ततश्च परितः किंचिद्दूरावधि भुवः स्थलं सम्यक् सुधेष्टकचितं विदध्यात् ।

आदौ फ्रान्स्देशे 'अर्टायस्' इति स्थले निम्नकूपोऽयं यतो न्यखन्यत, ततोऽस्य 'आर्टीषियन् कूपः' इति व्यवहारः समजनीति केचन वदन्ति । न हीदृशाः कूपाः प्रागस्मद्देशे सर्वथा नाभवन्; न वाधुना च न सन्ति । ये हि नाम महर्षिभिः, कविभिरन्यैश्च बहुभिस्तत्र तत्र वर्णिताः प्राचीना बह्वचो वाप्यः, ताः खलु सर्वथामीभ्यो निम्नकूपेभ्योऽप्यगाधाः; तासां चाम्भांसि सुतरामदसीयेभ्योऽप्यतिशयावहानि गुणत इति विश्वस्यते । इदानीमपि स्थलेषु खलु बहुषु सन्ति वाप्यस्तादृश्यो नैकशः । या नाम दृष्टमात्रा एव, कैर्महात्मभिः कया शक्त्या कैरुपकरणैः कथमेता न्यबध्यन्तेति पश्यतां मनांसि स्वोदकेष्विवागाधेषु आश्चर्यपूरेषु निमज्जयन्ति ।

निम्नकूपोदकं हि सर्वत्र भवति विशेषतो विमलम्; भवति च नितरामारोग्यावहम् । किंतु क्वचित् एतेषु चाम्भःसु किंचिद्द्रवेद्विलीनं सामुद्रलवणम्, क्षारो वा नवसारस्य । अप्सु खल्वासु विलीनः प्राणवायुः (Dissolved Oxygen) प्रमाणतो नितरां हीयते; खनिजाः पदार्थाश्चातिरिच्यन्ते । द्वाभ्यामप्यमूभ्यां कारणाभ्यामम्मांस्यमूनि रसनां न रसयन्ति, अनिर्देश्यरसत्वात् । एतद्धि सलिलं बहुभिर्गुणैः विदारकोदकमेवानुसरति ।

(क्रमशः)

पण्डितदुरैस्वाम्ययय्यङ्गार्यः ।

॥ श्रीः ॥

# ॥ संयोगितास्वयंवरः ॥

---

" यस्याः शरच्चन्द्रनिभेन कीर्ति-
पूरेण सौशील्यसमुद्भवेन ।
विश्वं प्रकामं विशदं बभूव
संयोगिता सा सुचिरं विभाति ॥ "

एतादृशैरनेकैर्मञ्जुलै रसप्रवर्षिभिः पद्यसमुदयैः कविकुलस्य, रमणीरत्नमिति रमणीनाम्, भारतीयं वनितारत्नमिति भारतीयानाम्, कमनीयवपुष्ट्वेन रूपाभिलाषिणाम्, सुगुणशालित्वेन गुणाभिलाषिणाम्, शोभनगुणानां कमनीयशरीरस्य चैकत्रैवोत्पादनेन 'सुकृतं विधिना' इति विधिस्तोत्रपराणां च जनानां वर्णनविषयीभूता आसीत् कनोजपत्तनाधिवासिनो राठोडवंशावतंसस्य जयचन्द्रराजस्य सुता संयोगितानाम्नी ।

बाल्ये वयसि वर्तमानायाः, शिशुक्रीडं क्रीडन्त्याः, निर्निमित्तहासपरिदृश्यमानरदनमुकुलायाः, अव्यक्तभाषितेन पित्रोः पारेमानमानन्दमुपजनयन्त्या अस्या अत्यगादानन्दमयः पञ्चषसंवत्सरात्मकः समयः । ततश्च सह वयस्याभिः, पितृदत्तक्रीडनकैर्यथासुखं क्रीडन्तीयम्, पुनरपि पञ्चषानत्यवाहयत्संवत्सरान् । ततश्च क्षत्रियदारिकेयमिति पित्रा प्रदत्तैः क्रीडायुधैरेवेयमक्रीडत् । क्रीडाविषयीभूतानां वस्तूनामस्याः प्रीत्युत्पादकपदार्थाः प्रासासिभल्लादयो ह्यासन् । सांग्रा-

मिकश्चाश्वो यथास्याः प्रीतिजनकोऽभवत्, न तथान्यः कोऽपि । एभिः प्रासादिभिरश्वेन च नितान्तं क्रीडन्तीयं बाला, कदाचिदश्वस्य नितरां पलायनेनात्मानं विनोदयन्ती, कदाचित्सैनिकानामग्रेसरी भूत्वा मिथ्यायोधनं नाटयन्ती, कदाचित्सादिनी भूत्वा अश्वारूढैः सैनिकैः सहाहमहमिकया धावन्ती, कदाचिदश्वारूढा शिक्षितुकामेव तं द्रुतगत्या वर्तुलं प्रेरयन्ती, कदाचिदल्पसैन्येन सहाटवीं गत्वा नानामृगपक्षिणां मृगययात्मानं विनोदयन्ती पित्रोरमितमानन्दं जनयांबभूव ।

अश्वादिभिः क्रीडन्त्या अप्यस्या न कदाचिदहश्यत भाषाविज्ञाने विमुखता । 'लिपेर्यथावद्ग्रहणेन' वाङ्मयान्यालोडयन्त्या अस्या रामायणमहाभारतादीनां कथा विशेषेण प्रीणयन्त्य आसन्; तत्राप्यहल्यासीताकुन्तीगान्धारीद्रौपदीसावित्रीविदुलादीनां पतिव्रताललामभूतानां कमनीयतमेषु सुबोधदायिषु जीवनचरितेषु सविशेषोऽस्या आदरः संदृश्यते स्म । कथानामासामनवरतपरिचयेनैवास्या मनः सुमनः संजातम् । यैर्गुणैरियं वन्दनीया सकलजगतः, वर्णनीया कविकलापस्य, माननीया मानिनीनाम्, अभिमानास्पदं भारतीयानामभूत्, तेषां गुणानां रामायणादिकथापरिचयादेव समुद्भव इति न कस्याप्यावश्यकं वक्तुम् । समर्थः खलु महोदयानां कथापरिचयोऽप्यात्मसात्कर्तुम् ।

नापि कथाकुतुकिनीयं कुलाचारविज्ञानविमुखतामकरोत् । 'उत्सन्नकुलधर्माणां मनुष्याणां नियतं नरके वासः' इति गुरुमुखाच्छ्रुतवत्या तया, अशेषा अपि कुलाचारा मात्रादिभ्योऽवगता अभवन्; यैरेव कुलाचारविज्ञानैरस्या अकलङ्को यशस्तुहिनभानुरद्यापि भारतं वर्षमिदं प्रकाशयति । स्वीकृतमस्याः कुलाचारैकदेशिकत्वं मात्रैव ।

निमिषकाष्ठातुल्यं गच्छता कालेन, कृतेयं दारिका राकापतिरिव पञ्चदशदिनैः, पञ्चदशवर्षैः संपूर्णयौवनमनोहरा । दिने दिने नवयौवनेनोपचीयमानसुषमाया अस्या मुखेनाधरीकृतः शीतकिरणो राकापतिः; अलिनीलकुटिलकेशपाशेन सापत्रपः कृष्णभोगी, कृष्णवदनत्वेन भूमौ स्थातुमसहमान इव, फणिपतिं प्रष्टुमिव बिलप्रवेशव्याजेन रसातलमगात्; कर्णप्रवेशाभिलाषिणी चकितप्रेक्षणे समवेक्ष्य नेत्रे, 'मृगवंश्येष्वेवाक्ष्णोः प्रकामविस्तारः, तारल्यं च' इति दुरभिमानस्यापनोदेन सुलज्जिता हरिण्यः, 'निन्दितः खलु पूर्वासः' इति मत्वेवाटवीमविशन्; ऋजुनासया तया स्वीयेषु प्रमदवनेषु प्रेम्णोपवर्धितचम्पककोरका अपि विलज्जिता भूत्वा, अन्तिकवासमसहमाना इव वृक्षाग्राण्यलंचक्रुः; बिम्बोष्ठ्या अधरेण हुंकृताः प्रवालवल्ल्योऽम्बुधिजलमज्जनार्थमाजग्मुः; वीक्ष्य पद्मालयासमेताया अस्या ग्रीवाम्, सुलज्जितो लक्ष्मीसहोदरोऽपि शङ्खो वैकुण्ठमध्यास्ते स्म । किं बहूक्त्या? विधेर्मानसीयं सृष्टिरिति, अपूर्वेति, अनुत्तमेति, अनुपमेयेति चावर्णि जनैः ।

नेदं महदाश्चर्यम्, पूर्णोऽपि गङ्गाशोणादिभिरनवरतं पूर्यमाणोऽपि जलधिः पार्वणं सुधांशुबिम्बमभिलष्यतीति । कः खलु गृहागतां कमलां पदाभिताडयेत्? को हि वैधेयः कामदोग्ध्रीं लगुडाघातैरुद्वेजयेत्? सांप्रतमेवेदम्, यत्किल यशःपूरितभुवनस्यापि जयचन्द्रस्य समधिकयशःसंभूत्यै राजसूयेन देवद्विजतर्पणं नाम । को हि नानुमन्येत राज्ञो राजसूयेन यजनम्? इदं किल विशेषतोऽभिनन्दनीयम्, यदनेन यज्ञान्ते सिद्धान्तितं संयोगिताविवाहमङ्गलम् । यतोऽनायासेन आगमिष्यत्यत्र राजन्यकम्; संयोगितापि नवयौवन-

संपदा युताभूत्। काल एवायमस्या अनुरूपवरसंगमस्य।

एकदा मनसि निश्चितं राजसूययजनं संयोगितास्वयंवरं चान्तःपुराणि श्रावयतानेनामण्ड्यन्त संयोगितामातुर्विजयिन्यभिख्याया माहिष्या गृहाः। गृहागत एव राजनि, त्यक्तसौवर्णमञ्चया अनया सादरं ससंभ्रमं च निर्वर्तितः पत्युरभ्युत्थानादिः समुचित आचारः। 'मास्तु; नेदमभ्युत्थानादिकमावश्यकं दैनंदिनस्यागमनस्य' इति समवसिते सामयिके संलापे, प्रस्तुतो जयचन्द्रेणागमनोद्देशः।

सोऽब्रवीत्— 'अयि प्रेयसि! प्राक् कियतः कालात्सुसंभारेण निर्वर्तितोऽश्वमेधः सपत्नेन पृथ्वीराजेनेति श्रुतमात्र एवास्मिन्वचसि, समुद्भूता मे राजसूययजनेच्छा। स्पृहाया अस्या आगतोऽधुना परिणतिकालः। मासेन भविष्यति राजसूयारम्भः। अपि च, संयोगितायाः विवाहमङ्गलमपि राजसूयान्त एव संपादयितुमभिलष्यामि; निदानानि त्वस्मिन् सुबहूनि। इदमेव तावदधुना ज्ञातव्यमापतति; कस्मै राज्ञे राजनन्दनाय वा स्पृहयति संयोगितेति। नातः परमुपेक्ष्यः संयोगितोद्वाहः। कालोप्तबीजस्य क्षेत्रस्येव काल एवोद्वाहादीनि कर्माण्यनुष्ठाप्यमानानां जनानां न कदाचिदपि फलानुपलब्धिभयम्; अन्यथा तु, अकाले उप्तबीजमिव शालिक्षेत्रम्, कुसुमागमेऽनुपलब्धवरतरुरिव लता, श्रमायैव भवति। तत्सद्य एवान्वेष्टव्यः कुलशीलविद्यारूपद्रविणादिभिरत्युत्तमः संयोगिताया ईप्सितश्च भर्ता' इति।

का खलु स्त्रीजनसुलभकुतूहलस्वभावा विश्वतो रमणीयं श्वश्रूभावं सद्य एवागतं नाभिनन्दति? श्रुत्वैवैतत् हृदुदधेरमृतकिरणायमानं वचः, समुद्भूतानन्दबाष्पपरिवाहिणी परिमृज्य चक्षुषी, विजयिन्य-

ब्रवीत्— 'नाथ! नेदमवेक्षणमस्मादृशीनामज्ञानावृतस्वान्तानां स्त्रीणां संभवति; तथापि, नाथनियोग एवैष इति मत्वा, चिराय मनसि परिशीलितममुमधिकृत्य विषयम्, किमपि ब्रवीमि। मयापि विषयस्यास्य कृतं चिराय परिशीलनम्, आगच्छत्येवायं विषयः कदाचित्पुरत इति। संयोगितापि पृष्टाभूत्। संपूर्णेऽपि राजमण्डले, सहजमित्रत्वे न्याय्येऽपि द्विषद्भावमापन्नान्नाथस्य मातृष्वसेयाद्देहलीपतेरश्वमेधयाजिनः पृथ्वीराजादन्यो न कश्चिद्राजा राजपुत्रो वास्या हृदयदर्पणे प्रतिबिम्बभावमवाप्तुं शक्तः। प्रयत्नशतैरप्यनिवारणीय एवैष तस्या निश्चयः। तत्किमनुष्ठेयमित्यत्र नाथ एव प्रमाणम्' इति।

श्रुतमात्र एवास्मिन् वचने, द्विष्टार्थश्रवणसमुत्पन्नामर्षेण स्फुलिङ्गायितनयनोऽयमब्रवीत्-- 'नेदं कदाचिदपि शक्यम्, यत् पृथ्वीराजाय सबहुमानं कन्यासमर्पणं नाम। स खल्वहित एवास्माकम्; तमिच्छन्ती दारिकेयं वरं यद्यजाताभविष्यत्। अस्तु। तस्यै वक्तव्यम् 'पृथ्वीराजादन्यः कोऽपि राजा राजपुत्रो वा गवेषणीयः; नो चेद्राज्ञि राजनन्दने वा तवानुरागः, कश्चन दुर्गतोऽपि वरं वरः' इति। एतादृश्या वचनपदव्या निवर्तयितव्यं पृथ्वीराजात्संयोगितामानसम्; त्वयैवानुष्ठेयमिदं कार्यम्। यद्यपार्थो भवेदुद्यमोऽयम्; तर्हि यद्भवेत्पश्चात्तद्भवतु। गच्छाम्यहमधुना धर्मासनमधिष्ठातुम्। श्वोऽस्मिन्नेव समय आगच्छामि तावकीनोद्यमतरोः कियतांशेन सफलत्वमिति प्रत्यक्षीकर्तुम्' इत्युक्त्वा सरयमन्तःपुरान्निरगाद्राजा जयचन्द्रः।

इत्यादिमो विरामः।

---

पृथ्वीराजस्य जयचन्द्रस्य च मातृष्वसेयत्वेऽपि सपत्नतानिदानं खल्वनयोर्मातामहेनापुत्रेणानङ्गपालेन परिपालितं देहलीराज्यमभूत् । यद्यप्यनयोरप्यासीद्राज्यलक्ष्मीः ; अथापि, अल्पीयस्यापि संपदा कृतकृत्यतां मन्वानानां न वर्धयति लक्ष्मीं विधिरिति द्वयोरप्यासीत्सविशेषास्मिन् स्पृहा । संनिहिते च कियता कालेनानङ्गपालस्य पञ्चतासमये, पुरःस्थितेन शैलेन द्विधाकृतस्रोतसा सरितेव द्वैधीभावापन्नमनसापि तेन निपुणं निरीक्ष्यानयोः शौर्यौदार्यादिगुणान्, पृथ्वीराजायैवार्पितं निखिलमपि देहलीराज्यम् । नान्वमन्यतामात्योदितं संपदो द्वैधीकरणमपि ।

कर्णाभ्यर्णमागतमात्र एवास्मिन् वचसि, गृहीतः खल्वसूयापिशाचिकया पर्याकुलबुद्धिसत्त्वो जयचन्द्रः । अमन्यत पृथ्वीराजेन साकमात्मनो वैरिभावम्; अन्वैक्षतास्य च्छिद्रम्; उदयुङ्क्त चानेन सहायोधनं कर्तुम् । अनयैव खल्वसूयापिशाचिकया समूलं संपन्नो भारतनाशः; लुप्तप्रायोऽभूदार्यधर्मः; कथाशेषतामापन्नं शिल्पविज्ञानम्; नष्टप्रायोऽभून्महान् ग्रन्थराशिः; कीर्तिशेषतामगच्छन् शास्त्रपारावारपारीणाः । किं बहुना? भारतीया न तामद्यापि मुञ्चन्ति ।

कालेन कालधर्ममापन्नेऽनङ्गपाले, पृथ्वीराजो मुक्त्वा स्वीयामजमीराभिधानां राजधानीम्, हरिणलाञ्छनाभिजनैर्युधिष्ठिरादिभिः प्राचीनैः, तोमरान्ववायैरनङ्गपालादिभिरर्वाचीनैश्चोपभुक्तमुक्तामिन्द्रप्रस्थापरपर्यायां देहलीमेव राजधानीत्वेन स्वीचकार । औदार्यादिभिर्गुणैर्युधिष्ठिरकल्पोऽयमुद्युयुजे तेजोयशोभ्यां तिग्मतुहिनरश्मी लघूकर्तुम् । तदर्थमेव च निश्चिकाय कुरुक्षेत्रे हयमेधाभिधानं कर्तुं सप्ततन्तुम् । राजमण्डलाद्वस्वाप्तयेऽश्वरक्षणार्थं च सज्जीकृतः सेनासंभारः । उत्सृष्टः

शशलक्ष्माणं कलानिधिं श्यामाभ्यां कर्णाभ्यां क्षौमकुथयुतया स्वाङ्गकान्त्या विडम्बयन् अश्वः । अभूवन्नश्वरक्षणे जागरूकाः सैनिकाः । वितीर्णमनीकाधिपत्यं विजयसिंहाभिधानाय सेनापतये । भर्त्रनुज्ञाप्तबलेनानेन, शशिनि मूर्छितेन चण्डभानोरंशुनेव नैशं तमो विद्रावितमभूदखिलमपि राजन्यकम्; अधिगतं चास्मात्प्रभूतं वसु । 'सर्वारम्भास्तण्डुलाः प्रस्थमूलाः' इति किल किंवदन्ती सत्यैवेत्याभाति; यतो महाराजस्य युधिष्ठिरस्याप्यपेक्षितमभूद्द्रव्यं राजसूयारम्भे । नात्र दोषास्पदं देहलीपतिरपि पृथ्वीराजः ।

अधिगते च राजन्यकाद्विपुले द्रविणे, प्रवृत्तः पृथ्वीराजोऽमरामोदकारिणि हयमेधाभिधाने सप्ततन्तुकर्मणि । अनुपदमेवाज्ञापितोऽनुचरनिवहः संभारनिवहार्जनमकरोत्! सादरमामन्त्रिता राजानो वेदविदो ब्राह्मणाश्च यथाकालमलंचक्रुर्यज्ञमण्डपम् ।

शुभे दिने वेदविद्भिः ऋत्विग्भिः समन्ततः कन्दलितायां वेद्याम्, राजन्यकेन सदस्यैश्चालंकृते यज्ञमण्डपे, पृथ्वीराजः प्रारभत यज्ञम् । अवसाने च ऋत्विगादिवरणस्य, तुष्टुवुः सुसंस्कृतचर्वादिप्रक्षेपसहकृतनुतिभिर्देवान् महिषीसहायेन सह राज्ञा ऋत्विगादयः । मध्याह्ने चागतान् याचकान् भोजनधनदानादिना राजा पूजयामास । सुसूक्ष्मं निरीक्षमाणानां दोषैकदृशामहितानामपि नात्र समदृश्यत कुत्रापि न्यूनता ।

क्रमेणानेन कतिपयैरहोभिर्मखः समाप्तिमगमत्; अवभृथस्नानमप्यवसितम् । धनभोजनसत्कारादिना सुपूजिताः सुतृप्ताश्च ऋत्विगादयोऽर्थिनश्च 'पश्चाद्भागं पीडयता यवनव्याघ्रेणाक्रान्तेयं भारती गौः; त्रायस्वेमाम् । सर्वथा शुभं भवताद्भारतस्य' इत्याशीःप्रच्छन्न-

विज्ञप्त्या, तं यवनाक्रान्तभूरक्षणे न्ययोजयन् । सत्कृताः क्षत्रकर्माणः, 'यदि भविष्यत्यस्मत्सेनानीर्भवान्, वयमपि साहाय्यमादध्महे' इति संधामकार्षुः ; जग्मुश्च वर्णयन्तः पृथ्वीराजस्य यशःपराक्रमौ स्वस्वनगराणि । गतमनेनाश्वमेधेन पृथ्वीराजयशो दिगन्ते ।

नैतादृशमेकमपि जगति वस्तु; यत्सर्वोऽपि जनोऽनुत्तमं गणयति, स्तौति चैकमत्येन । अमुमेवानुसृत्य न्यायम्, पृथ्वीराजस्य मातृष्वसेय एकः परं सुरभिणा यशसास्योद्वेजितमना बभूव । प्रागेव समिद्धस्यास्य प्रद्वेषाग्नेर्घृतधारायितमश्वमेधेन । क्षत्रियाणामभूदस्मिन्नेव पृथ्वीराजे महाननुरागः; अतः खल्वायोधनेनाजय्यमवगम्य पृथ्वीराजम्, जेतुमैच्छद्यशसा जयचन्द्रः । तमनुचिकीर्षुणैवानेनारब्धः क्रतू राजसूयाभिधानः ; तदवसाने च निर्णीतः संयोगिताविवाहः । तदर्थमेव महिषीं प्रष्टुकामोऽयमगमदन्तःपुरम् । यदभूत्तत्र, तदुदितमेव प्राक् ।

## इति द्वितीयो विरामः ।

---

गतेऽन्तःपुराज्जयचन्द्रे, कियता कालेनामन्त्रिताभूत्संयोगिता विजयिन्या । अनुपदमेवागत्य, कृतपादवन्दनादिगुरुजनसमुचिताचाराया अस्या विजयिन्याश्चाभूदतिचिरं किमपि रहस्यम् । किमभूदिति न ज्ञातं केनापि; तथापि, राज्ञे 'राजसूयनिमित्तेनागतानां राज्ञां मध्ये, सुनिपुणं निरीक्ष्य रूपादिगुणान्, स्वयमेवानुत्तमं ग्रहीष्यति भर्तारं संयोगिता' इत्येव वक्तव्यमिति निश्चयमापन्नो विचारः । गता च पूर्वमेव मनसा वृतस्यानुरूपस्य च पत्युर्लाभाशया प्रमुदितमानसा संयोगिताप्यात्मसदनम् ।

**वैद्योपाह्वः-परशुरामशर्मा ।**

भगवतीं श्रियं देवीं

इति भगवतो विशेषसंनिधिस्थाने पद्मवने तद्विग्रह इवासौ विशेषेण संनिधत्ते । एतेन 'साहं वै पङ्कजे जाता सूर्यरश्मिप्रबोधिते । भूत्यर्थं सर्वभूतानां पद्मा श्रीः पद्ममालिनी' इति श्रीवासवसंवादोक्तं सर्वभूतोज्जीवनार्थावतारमौलभ्यमपि प्रदर्शितं भवति । एवं मङ्गलगुणविभूतियोगेन निर्दोषत्वमपि संकलय्याह— **भगवतीमिति** ॥ 'ज्ञानशक्तिबल—' इत्यारभ्य 'विना हेयैर्गुणादिभिः' इति हि स्मर्यते । अथ उक्तवक्ष्यमाणसर्वातिशयस्थापिकया सुप्रसिद्धस्वासाधारणसमाख्यया सर्वसमाश्रयणीयत्वादिकमाह— **श्रियमिति** ॥ एवं हि श्रीशब्दो निरुच्यते— 'शृणाति निखिलान्दोषान् श्रीणाति च गुणैर्जगत् । श्रीयते चाखिलैर्नित्यं श्रयते च परं पदम् ॥' इति, 'श्रयन्तीं श्रीयमाणां च शृणन्तीं शृण्वतीमपि ।' इति च । अस्य च नाम्नः सर्वप्रकारोत्कर्षज्ञापकत्वमाहुः— 'श्रीरित्येव च नाम ते भगवति ब्रूमः कथं त्वां वयम्' इति, 'श्रीरसि यतः' इति च । भगवन्नारायणपदोक्तस्यानुरूप्यं च 'भगवतीम्' 'श्रियम्' इति पदाभ्यां दर्शितम् । श्रीपदनिरुक्तिभिः संश्रितदोषनिराकरणम्, प्राप्यरुचिप्रापकाध्यवसायादिप्रदानम, उपायस्वरूपनिर्वर्तकत्वम्, 'पितेव त्वत्प्रेयान्' इत्युक्तं पतिप्रसादजनकत्वं च सिद्धम् । एवमाश्रितार्थव्यापारास्तदनुगुणावतारादयश्च न कर्मकृता इत्याह— **देवीमिति** ॥ भर्तुर्लीलायामैकरस्यात्तदनुगुणव्यापारोपपत्तिरिति भावः । 'भगवतीम्' इत्यादिपदत्रयेण द्विषट्कार्णस्थभगवद्वासुदेवपदार्थानुरूप्यं च ज्ञाप्यते । श्रियं देवीमिति समभिव्याहारेण, 'श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम्' 'श्रीर्देवी पयसस्तस्मादुत्थिता धृतपङ्कजा' इत्यादिश्रुतिस्मृतयः सूच्यन्ते । 'श्रियः श्रीश्च भवेदग्र्या' इत्युक्तं पतिसंबन्धेन द्योतमानत्वादिकमपि देवीमित्यनेन गम्यते ॥

एवम् 'क्रीडार्थमवतीर्णस्य तस्य' इत्याद्युक्तलोकानुकम्पाहेतुकावतारायाअपि तस्याः 'पश्यतां सर्वदेवानां ययौ वक्षःस्थलं हरेः' 'मया विना

G 2

## नित्यानपायिनीं निरवद्यां

शुष्यति शोकदीनम्' इत्यादिभिरागन्तुकसंश्लेषविश्लेषादिव्यपदेशात्कथमपराधभीतानां तत्तदवस्थासु तत्पुरस्कारेण भगवदाश्रयणं स्यादित्यत्राह— **नित्यानपायिनीमिति**। 'श्रीवत्सवक्षा नित्यश्रीः' 'नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी' 'अन्येषु चावतारेषु विष्णोरेषानपायिनी' 'भगवद्वासुदेवस्य नित्यैवैषानपायिनी' 'महाविभूतेः संपूर्णषाड्गुण्यवपुषः प्रभोः। मम सर्वात्मभूतस्य नित्यैवैषानपायिनी॥' इत्यादिभिरनयोर्न कदाचिदपि विश्लेषः। अवतारेष्वपि कदाचिद्विश्लेषशोकादेरभिनयमात्रमेव। इदं च श्रीमद्रामायणान्ते सूचितम्— 'रामस्य सव्यपार्श्वे तु पद्मा श्रीः समवस्थिता। दक्षिणे ह्रीर्विशालाक्षी व्यवसायस्तथाग्रतः' इति। एवं देवीमित्यन्तेन व्याख्येयस्थश्रीशब्दार्थो दर्शितः। तन्मुखेन नित्यं भगवतः सुखप्रसादनीयत्वं व्यञ्जयितुं नित्यानपायिनीमित्यन्तेन तत्रत्यमतुबर्थश्चोक्तो भवति॥

ननु भगवतीमित्यादिभिः स्वतो निर्दोषत्वादौ नित्यसंबन्धे च सिद्धेऽपि, स्त्रीत्वोपाधिवशात् कदाचित्पतिपारार्थ्यवैमुख्यम्, पतिप्रतिकूलाभिप्रायत्वम्, अविमृश्यकारित्वम्, नृशंसत्वम्, निग्रहरुचित्वं च, 'शतह्रदानां लोलत्वं मत्स्यानां प्रतिकूलताम्। गरुडानिलयोः शैघ्र्यमनुगच्छन्ति योषितः॥' विद्यते स्त्रीषु चापल्यं किं न कुर्वन्ति योषितः।' इत्यादिभिः प्रसिद्धं यदि स्यात्; तदा कथं नित्यमशरण्यशरण्यत्वं स्यादित्यत्राह— **निरवद्यामिति**॥ सामान्यतः स्त्रीत्वनिबन्धनदोषवचनं क्षेत्रज्ञेष्वेव कर्मोपाधिविशेषनियतं प्रायिकं चेति नास्यास्तत्प्रसङ्गः। उक्तं च तथैव— 'अनवद्यानवद्याङ्गी नित्यं तद्धर्मधर्मिणी' इति। श्रीमद्रामायणे च— 'इयं तु भवतो भार्या दोषैरेतैर्विवर्जिता' इति। किं च, 'आनृशंस्यं परो धर्मस्त्वत्त एव मया श्रुतः' इति स्मारयन्त्या नृशंसत्वप्रसङ्ग एव नास्ति। निग्रहरुचिश्च समर्थाया एवास्या अत्यन्तापकारिष्वपि न संभव

देवदेवदिव्यमहिषीम् अखिलजगन्मातरम् (अस्मन्मातरम्)

तीति स्ववाक्यसिद्धम्, 'असंन्देशात्तु रामस्य तपसश्चानुपालनात् । न त्वां कुर्मि दशग्रीव भस्म भस्मार्ह तेजसा ॥' इति । एतद्विभूतिभूतदेवतादिषु कर्मवशादीदृशदोषसंभवेऽपि नास्यास्तन्मूलभूतः संकल्पः । 'त्वया देवि परित्यक्तं सकलं भुवनत्रयम् । विनष्टप्रायमभवत् त्वयेदानीं समेधितम् ॥' 'संत्यक्ता ये त्वयामले—' इत्यादिषूक्तसंत्यागोऽप्युपेक्षामात्रम्, तच्च प्रीतिकोपविरहेणावस्थानम् ॥

नन्वेवं भगवदभिमतत्वादिकं शरण्यत्वौपयिकं सर्वं तत्पत्न्यन्तरेऽपि स्यात्, 'विष्टम्भो दिवो धरुणः पृथिव्याः' इत्यादिभिस्तन्माहात्म्यप्रसिद्धेः; तारतम्यं तु दुरूहम्; अतः कथम् 'अशरण्यशरण्यामनन्यशरणः' इत्युच्यते? तत्राह— **देवदेवदिव्यमहिषीमिति** ॥ यथा मनुष्यादिभ्योऽधिकानां ब्रह्मादिदेवतानां मनुष्यस्थानीयानां सर्वप्रकारसमधिकतया भगवान् देवः, तथा ब्रह्मादिदेवपत्नीभ्यः समधिकानां भगवत्पत्नीनामप्यसौ प्रधानतमेत्यभिप्रायेणात्र दिव्यशब्दः । इयं ह्युभयाधिष्ठानैकशेषित्वसाम्राज्येन सर्वमङ्गलप्रदायित्वादिभिश्च प्रकृष्यत इति भगवच्छास्त्रे उक्तम् । तथा ब्राह्मे पुराणेऽपि— 'अनन्तनामधेया च शक्तिचक्रस्य नायिका ।' इति । पत्न्यादिषु शक्तिशब्दस्तद्विहारादिकार्योपयुक्तविशेषणत्वाभिप्रायः । तदिदं प्राधान्यम्, 'कृताभिषेका महिषी' इति विशेषणात् महिषीशब्देनैव वा विवक्षितम्; तदा दिव्यशब्दः, तद्विग्रहस्य भगवद्विग्रहस्येवाप्राकृतत्वादिकं व्यनक्ति ॥

एवं चिकीर्षितभङ्गपरिहाराय प्रत्याख्यानानर्हत्वाय च पतिवाल्लभ्यातिशय उक्तः । अथ तथाविधोत्कर्षस्वनिकर्षस्वापराधदर्शनजनितसाध्वसपरिहाराय प्रजावात्सल्यातिशयमाह—**अखिलजगन्मातरमिति** ॥ जगच्छब्द इह चेतनपरः । 'नमामि सर्वलोकानां जननीमब्धिसंभवाम्' 'त्वं माता सर्वलोकानाम्' इत्यादिभिरस्याश्चतुर्मुखादीन्सर्वान् जन्तून्प्रति मातृत्वात् लोकमातेति नाम पठ्यते । एवमुपबृंहणबलात् 'निजदेवीं मातरम्'

# अशरण्यशरण्याम्

इत्यादिषूक्तमस्या मातृत्वं भगवतः पितृत्वेन समानविषयम्। न हि मदेकवर्जमिदमस्या मातृत्वमित्यभिप्रायेण अखिलशब्दः। तदिदं विश्वमातृत्वप्रदर्शितं निरुपाधिकवात्सल्यं रिपूणामपि वत्सलस्य पत्युरनुरूपतमम्। तच्च हितचिन्तारहितेषु अहितचिन्तकेष्वपि कयाचिन्नियत्या कदाचित्फलति; किं पुनरिदानीं हितचिन्तोन्मुखे मयीति भावः। दुःसहनिरन्तरापराधे दोषैकनिधौ रावणेऽपि हि सोन्मादपुत्र इव जननीत्वेनैव जातवात्सल्या 'मित्रमौपयिकं कर्तुम्' 'विदितः स हि धर्मज्ञः' 'प्रसादयस्व त्वं चैनम्' इत्यादिभिः सर्वाधिकं रहस्यमुपदिश्य, तद्भ्रमप्रशमने प्रयतते स्म। एवमखिलजगन्मातरमित्यन्तैः पदैश्चिकीर्षितायास्तत्प्रपत्तेरतिशयितामोघधर्मत्वं सूचितम्; यथोक्तं काश्यपीये— 'नारायणात्मिकां देवीं श्रियं त्रैलोक्यमातरम्। भजमानो महाभाग परमो धर्म उच्यते॥' इति। अयं च तदात्मकत्वव्यपदेशस्तत्पत्नीत्वाभिप्रायेण। अत्र 'अस्मत्स्वामिन्' इतिवत् 'अस्मन्मातरम्' इत्यपि श्रीविष्णुचित्तादयः पठन्ति; व्याचक्षते च 'यामुनमुनिवंशजननेन पुनश्च विशेषेण 'अस्मन्मतरमिति' इति॥

उक्तैः स्वभावैः सिद्धमपेक्षितानुगुणमाकारमाह—**अशरण्यशरण्यामिति**। येषां मोक्षोपायनिष्पत्तिकामानां सर्वलोकशरण्योऽपि न भवेच्छरण्यः, तेषामप्यसौ शरण्या; यथोक्तं त्रिजटया— 'भर्त्सितामपि याचध्वं राक्षस्यः किं विवक्षया। राघवाद्धि भयं घोरं राक्षसानामुपस्थितम्॥' 'प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा। अलमेषा परित्रातुं राक्षस्यो महतो भयात्॥' इति। वानरपरिषदि चैतदनुवदन्वायुसूनुराह— 'अलमेषा परित्रातुं राघवाद्राक्षसीगणम्।' 'ततः सा ह्रीमती बाला भर्तुर्विजयहर्षिता। अवोचद्यदि तत्तथ्यं भवेयं शरणं हि वः॥' इति। 'पापानां वा शुभानां वा इत्यादीनि च प्रभञ्जनसुतं प्रति तद्वाक्यानि। कुपितनरसिंहसमीपागतिभीताश्च प्रजापतिप्रभृतयस्तामेव विश्वमातरमाश्रित्य तत्पुरस्कारेण तमुपसेदुरि-

अनन्यशरणः शरणमहं प्रपद्ये ॥

ति पुराणप्रसिद्धम् । आहुश्च— 'मातर्मैथिलि राक्षसीस्त्वयि तथैवार्द्रापराधास्त्वया रक्षन्त्या—' इत्यादि ।

भवत्वेवमशरण्यशरण्यत्वं तस्याः; भवतस्तेन किमायातमित्यत्र तदेकप्रपत्तियोग्यां स्वावस्थां दर्शयति— **अनन्यशरण्य इति** । अन्यत् शरणं यस्य नास्ति सोऽनन्यशरणः । शरणमुपायः 'उपाये गृहरक्षित्रोः शब्दः शरणमित्ययम् । वर्तते सांप्रतं त्वेष उपायार्थैकवाचकः ॥' इति स्थापनात्[1] । एवमुत्तरत्रापि द्रष्टव्यम् । उत्तमपुरुषेणैव स्वान्वये सिद्धे 'अहम्' इत्यधिकोक्त्या स्वस्य दुष्करोपायान्तराशक्तिः सूच्यते । प्रपद्य इत्यत्र यद्यपि गत्यर्थेन धातुना बुद्ध्यर्थेन सता अध्यवसायमात्रमुपस्थाप्यते, तथापि प्रमाणानुसारात् शरणशब्दतात्पर्याच्च प्रार्थनाद्यन्वितभरन्यासं करोमीत्युक्तं भवति । प्रार्थ्यते चानन्तरं फलविशेषः । यस्तु परस्परोपकारेण दक्षिणादानेन प्रशासनेन वा भरन्यासः, नासौ प्रपत्तिः । नन्विदं मुमुक्षोरेव भगवद्व्यवच्छेदेन तदन्यप्रपदने तदैकान्त्यं विहन्यात्? मैवम्; यथा कर्मयोगादिकमनन्योपासनार्थतयोपादीयते, तथानन्यप्रपदनार्थतयोपादीयमानमिदं तद्वदैकान्त्यमेव स्थापयति । यथा स्वाधिकारोचितपरिकरार्चनेऽनन्यत्वाविरोधः, तथेहापि । 'आप्तो विष्णोरनाप्तश्च द्विधा परिकरः स्मृतः । नित्यो वन्द्यो न चानित्यः कर्मवश्यो मुमुक्षुभिः ॥' इति चोक्तम् । एवं घटकतया वरणेऽपि न विरोधः; अन्यथा गुरुभजनतत्पुरस्कारादिकमपि विरुध्येत । अथ 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' 'आचार्यमुपासीत' इत्यादिभिस्तादर्थ्यात् तत् संगृह्यते? इदमपि पूर्वोक्तैस्तथैव, अविशेषात् । किं च, श्रियः प्रपत्तिम् 'चन्द्रां प्रभासाम्' इति मन्त्रेण अलक्ष्मीनाशनार्थमामनन्ति; तथा 'ऋचः सामानि यजूꣳषि सा हि श्रीरमृता सताम्' इति । या मुमुक्षूणां मोक्षहेतुर्विद्यैव लक्ष्मीः, तदभा-

1. व्यवस्थापनात्

**पारमार्थिकभगवच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्ति-**

वनाशोऽनया क्रियत इति तदर्थं शरण्याभिप्रायसंवादिनी तन्महिषीप्रपत्ति-र्युक्तैवेति सिद्धम्। एवं सेयं साक्षात् परंपरया वा सर्वफलसाधिका। 'उदाराम्' इति श्रौतं पदं ह्यनवच्छिन्नविषयम्। तच्च 'सर्वकामप्रदां रम्यां संसारार्णवतारिणीम्। क्षिप्रप्रसादिनीं लक्ष्मीं शरण्यामनुचिन्तयेत् ॥' इत्या-दिस्वायंभुवादिवचनैरुपबृंहितम्। व्याचख्युश्च— 'ऐश्वर्यमक्षरगतिं परमं पदं वा' इत्यारभ्य 'कथय कोऽयमुदारभावः।' इति। व्यतिरेकमुखेन चैतत्स्थिरीकृतं चतुःश्लोक्याम्— श्रेयो नह्यरविन्दलोचनमनःकान्ताप्रसादा-दृते संसृत्यक्षरवैष्णवाध्वसु नृणां संभाव्यते कर्हिचित्' इति ॥

तत्किमत्रापेक्षितमित्यत्राह— **पारमार्थिकेति**। पारमार्थिकशब्दस्य चरणारविन्दविशेषणत्वे अर्थशब्दः प्रयोजनवाची। पारमार्थिकं परमार्थ इत्यर्थः। यद्वा, परमप्रयोजनभूतानुभवग्राह्यं परमभोग्यमित्यर्थः। एतेन परभक्त्यादिजननार्हत्वं व्यज्यते। निर्दोषगुणवत्स्वामिचरणयोः सेवकस्य भक्त्यतिशयः स्यादित्यभिप्रायेण भगवच्चरणशब्दः, अरविन्दत्वरूपणं च। 'स भ्रातुश्चरणौ गाढम्' 'यावन्न चरणौ भ्रातुः' 'तस्य ताम्रतलौ तात चरणौ सुप्रतिष्ठितौ। सुजातमृदुरक्ताभिरङ्गुलीभिरलंकृतौ ॥ प्रयतेन मया मूर्ध्ना गृहीत्वा ह्यभिवन्दितौ' इत्यादिष्विवान्योन्ययोगादपि शोभमान-त्वद्योतनाय युगलशब्दः। पारमार्थिकशब्दस्य परभक्त्यादिविशेषणत्वे अनु-भवविशेषणत्वेऽपि परमप्रयोजनत्वं भ्रमकैतवराहित्यं वा विवक्षितम्। ऐकान्तिकत्वं प्रयोजनान्तरानन्वयेन तदेकनियतत्वम्; तत एव नित्यानु-वृत्तत्वमात्यन्तिकत्वम्, अन्यार्थत्वे हि तत्सिद्धौ निवर्तेत। निरतिशयत्वमा-त्यन्तिकत्वमिति चाहुः। अत्र परभक्तिः उत्तरोत्तरसाक्षात्कारेच्छात्मिका धीः; सा च 'या प्रीतिः' इत्यादिष्विव विषयस्वभावजा, न त्विष्टसाधनत्वबुद्धि-जा। परज्ञानम् उत्तरोत्तरसाक्षात्कारः। साक्षात्कृते निरन्तरानुबुभूषा परमभक्तिः। अनुभवस्त्विह ह्यानुकूलतमत्वेन साक्षात्कार एव। नित्यानां

परज्ञानपरमभक्तिकृतपरिपूर्णानवरतनित्यविशदतमानन्यप्रयोजनान-

मुक्तानां च नित्यानुवृत्तैकरूपानुभवः क्षणभेदेन परभक्तित्वाद्याकारभेदैश्च विकल्प्यते। पूर्वपूर्वक्षणेवृत्तरोत्तरक्षणावच्छिन्नस्वरूपस्येष्टतमत्वमभिप्रेत्य कृतत्वव्यपदेशः ; तस्य मुख्यत्वं तु योगाविशेषजन्यानुभवे ॥

नन्विहोपायभूतपरभक्त्यादिभिर्मुक्तदशानुभवस्य कृतत्वं मुख्यमेवास्तु; तथासत्युपरि श्लोकत्रयोदितज्ञानस्य स्थानत्रयोदितपरभक्तेश्च प्रार्थनमुपपद्येत। तदर्थं च यथाभाष्यं संप्रतिपन्नाङ्गप्रपत्तिरिह प्रार्थिता स्यात्? मैवम्; 'प्रकृतिं स्थूलसूक्ष्मरूपां विसृज्य तदानीमेव मत्प्रसादलब्धमच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्तिपरज्ञान—' इत्यादिवक्ष्यमाणसरूपतया तदनुगुणमिह व्याख्यातुमुचितत्वात्। न च भगवत्प्रपत्तेः स्वतन्त्रतया मोक्षसाधनत्वं नास्तीति वाच्यम्; श्रुतिस्मृतिभगवच्छास्त्रेषु तत्स्वातन्त्र्यदृष्टेः। 'यो ब्रह्माणम्' इत्यादिके हि श्वेताश्वतरमन्त्रे हिरण्यगर्भादिकारणभूतपरमपुरुषशरणागतिर्मुमुक्षुणानुष्ठेयेति प्रतीयते। न च क्वचिदङ्गत्वदर्शनात् गुरुलघुविकल्पानुपपत्तेश्चात्र व्यवहितसाधनत्वं कल्प्यम्; अधिकारिभेदेन व्यवस्थापनात्। तथा चोपबृंहितं ब्राह्मे पुराणे— 'शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः। तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम्॥' इति। अहिर्बुध्न्येन च सुस्पष्टमुक्तम्— 'यत्नेन कामकामेन न साध्यं साधनान्तरैः। मुमुक्षुणा यत्सांख्येन योगेन न च भक्तितः॥ प्राप्यते परमं धाम यतो नावर्तते यतिः। तेन तेनाप्यते तत्तन्न्यासेनैव महामुने॥ परमात्मा च तेनैव प्राप्यते पुरुषोत्तमः।' इति। प्रपत्तिप्रयोगश्चाविलम्बितफलप्रद[1] एवमुदाहृतः—'अहमस्म्यपराधानामालयोऽकिंचनोऽगतिः। त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः॥ शरणागतिरित्युक्ता सा देवेऽस्मिन्प्रयुज्यताम्। तस्यानुबन्धाः पाप्मानः सर्वे नश्यन्ति तत्क्षणात्॥' इति। अत्रापि 'त्वमेवोपायभूतो मे भव' इत्यादिभिर्न्यासात्मकत्वं सूच्यते। 'तेषां तु तपसां न्यासमतिरिक्तं तपः

1. फलप्राप्तिपर्यन्त एवोदाहृतः

वधिकातिशयप्रियभगवदनुभवजनितावनवधिकातिशयप्रीतिकारिता-

श्रुतम्' इति चाह। न्यासशब्दस्य चात्र शरणागतिविषयत्वं दर्शितम्—'निक्षेपापरपर्यायो न्यासः पञ्चाङ्गसंयुतः। संन्यासस्त्याग इत्युक्तः शरणागतिरित्यपि॥' इति। 'न्यास इत्याहुर्मनीषिणो ब्रह्माणम्' इत्यत्र न्यासशब्दसामानाधिकरण्यं त्वन्यपरम्। एवं स्वतन्त्रप्रपत्तिसिद्धौ 'भक्त्या परमया वापि प्रपत्त्या वा महामते। प्राप्योऽहं नान्यथा प्राप्यो मम कैंकर्यलिप्सुभिः॥' इति विकल्पोऽपि व्यवस्थितविषय उपपद्यते। श्लोकत्रयोदितज्ञानादिकमप्यत्र स्वयंप्रयोजनतया प्रार्थ्यत इति न विरोधः। न च प्रपत्तिस्वातन्त्र्ये भाष्यविरोधः; तथा हि— 'चतुर्विधा भजन्ते माम्' इत्यादिना उपासनस्येव प्रपदनस्यापि 'तावदार्तिस्तथा वाञ्छा तावन्मोहस्तथासुखम्। यावन्न याति शरणं त्वामशेषाघनाशनम्॥ प्रपत्तेः क्वचिदप्येवं परापेक्षा न विद्यते। सा हि सर्वत्र सर्वेषां सर्वकामफलप्रदा॥' इत्यादिभिः सर्वाभिमतसाधनत्वावगतेः, सर्वफलसाधारणमपि तत्र चरमश्लोकविधेयं प्रकृतोपायविरोधिपापनिवर्तनरूपोदाहरणविशेषे प्रदर्शयामास। इह तु साध्यान्तरसाधनान्तररहितमन्त्रविवरणप्रवृत्तत्वात् प्राप्तिविरोधिनिरसनार्थतयोदाहरति। तस्मान्नोपायभक्त्यादिकमिहोच्यत इति सिद्धम्। परभक्त्यादिभिः साध्यमनुभवादिकं तदभावेऽपि मे प्रपत्तिमात्रेण भवत्विति विवक्षायां प्रस्तुतविरोधाभावेऽपि, वक्ष्यमाणानुसारेण विवक्षान्तरं दर्शितम्। आर्तोपच्छन्दनं गद्यं भाष्यं तु पररञ्जनम्। इत्यावलिधियोऽप्येवं प्रसीदेयुः प्रमाणतः॥

पुनश्च मुक्तानुभवं 'परिपूर्ण–' इत्यादिभिः षड्भिर्विशिनष्टि। अत्र हि मुमुक्षूणां भगवदभिमतविशेषेषु यथासंभवं सुकृततारतम्येन परिमिताकारगोचरत्वम्, खद्योतस्फुरणवत्सान्तरत्वम्, कंचित्कालं निरन्तरत्वेऽपि सारस्वतस्रोतोन्यायेन विच्छिन्नप्रवाहत्वम्, सामान्यतः सर्वविषयत्वेऽपि परोक्षरूपत्वम्, स्वयंप्रियत्वेऽपि मधुरभेषजनयेन मुक्तिरूपस्वप्रयोजनसाधनत्व-

# देशवृत्तान्तः ।

आङ्गलकलाशालासु आदिमकक्ष्यामारभ्य 'बि-ए' भागपर्यन्तं तत्तत्कक्ष्या-विद्यार्थिभिः संस्कृतभाषा वा तत्तद्देशभाषा वा अवश्यमभ्यसनीयेति पूर्वं निर्बन्ध आसीत् । तेन च बहुभिर्माणवकैर्गैर्वाणी अधीतेत्यासीदस्याः क्रमेण पुष्टिः । हाहन्त किं ब्रूमः सांप्रतिकीमवस्थाम् ; ऐषम आरभ्य खलु सर्वकलाशालानवीननियमानुसारेण 'एफ्-ए' भागे पाठनसंप्रदायः । भगवती गैर्वाणी च बहुषु पक्षभेदेषु अवान्तरवैकल्पिकतया नियमिताध्यापनेति हन्त हन्त विद्यार्थिभिः सर्वात्मना समुपेक्षितेति बत बत कण्ठे कुठारो भारतस्य वर्षस्य धर्मस्य मतस्य आस्तिक्यस्य परमस्य श्रेयसश्च कष्टं युगपदेव समापतितः । यस्मिन्नेव 'एफ् ए' भागे पूर्वं सहस्रं माणवका गैर्वाणीमपठन् , तस्मिन्नेकोऽपि निधिरिव विद्यार्थी संस्कृतभाषाध्येता विस्फारितलोचनैः पण्डितैरन्विष्यत इति कस्मै वा कथं वा निवेद्यतामन्याय्यं च अधार्मिकं च अश्रायसं चेदमतिमहद्वैशसम् । निपुणं च विमृश्यमाने नास्ति माणवकानां दोषः । तपस्विनस्ते किं कुर्वन्तु । गैर्वाणीमधिजिगांसमानेन हि बटुना तत्तद्देशभाषायामपि नियमितपुस्तकाध्ययनपरीक्षाविजयपूर्वकं प्रावीण्यं संपादनीयमिति निष्ठुरः खलु नियमः कल्पितः । आस्ताम् , अपि नाम देशभाषाविभागीयपाठ्यपुस्तकनियमनाधिकृतेन संघेन किमप्यालोचितम् ? येन वा विद्यार्थिना गैर्वाणी परमधीता, तेनैव तपस्विना 'एफ्-ए' भागे गैर्वाणी परिचिचीषुणा अवश्यं तत्तद्देशभाषायां तादृशानि पुस्तकानि पठनीयानि, यानि मेट्रिक्युलेषन्पर्यन्तं तत्तद्देशभाषामधीतवतैव पठितुं शक्यानि । आलोच्यताम् , यो हि द्राविडदेशीयः कश्चन विद्यार्थी आमेट्रिक्युलेषन्भागं गैर्वाणीमधीत्य 'एफए-' भागेऽपि गैर्वाणीमधिजिगांसते ; तेन ' विल्लिपुत्तूरार्भारत' प्रभृतीनि सप्ताष्टानि पुस्तकानि कथं नाम पठितुमपि स्पर्धन्ताम् । 'एम्-ए' विभाग इव हि अत्रापि उपभाषालेन स्वीकुर्वतां विद्यार्थिनां सौकर्याय देशभाषाविषये पाठ्यपुस्तकेषु संख्यातः प्रौढितश्च न्यूनता खलु करणीया । 'एफ्-ए ' भागे अक्षरग्रहणपूर्वकं लाटीन्प्रभृतीनि भाषान्तराणि गैर्वाणीसिषेविषया पिपठिषुः कथकारमात्मानं परीक्षायां विजयिनमभिमन्यतां विद्यार्थी । अन्यच्चेदमतिकष्टम् , यदुत 'एफ्-ए' भागे भाषाविभागमनुसरता विद्यार्थिना 'बि-ए' भागेऽपि सैव शाखा अनुसरणीयेति । न खलु विद्यार्थी नाम कश्चित् त्रिकालदर्शी सिद्धः. यः पञ्चषान्वर्षानात्मनो विद्याफलमात्मनैव प्रथमं निर्धारयिष्यति । सर्वथा संपन्नमिदं गैर्वाण्याः पण्डितानां च संघातमरणम् । अपि नाम पुनरप्यालोच्येतायं विषयो मद्रपुरे महितैर्महात्मभिर्गैर्वाणीपक्षपातिभिः । सर्वथा भगवती गैर्वाण्येव स्वात्मनो जीवितं च गौरवं चाभिरक्षतु ।

सहकारिसंपादकः ।

